तंजहा-तेनाहडे तक्करपओगे विरुद्धरज्जाइक्कमणे कूडतुलकूडमाणे तप्पडिरूवगववहारे ३ ॥ ( सूत्रम् )

अदत्तस्यादानं ग्रहणं द्विधा स्थूलं सूक्ष्मं च । तत्र स्थूलं चौर्यं गृहारण्यमार्गक्षेत्रादिषु न कार्यम् । सूक्ष्मं वणिग्भृत्यादानम् । स्थूलसूक्ष्मे अपि द्विधा सचित्तविषये अचित्तविषये च । तत्र सचित्तं सजीवं वस्तु, अचित्तं निर्जीवं, अन्यवस्तुनो धनिकानुज्ञया-दानेऽदत्तादानमेव । स्तेनाश्चौरास्तैराहृतं आनीतं स्तेनाहृतम् । चौरैर्विक्रयायानीतं ज्ञात्वा लातोऽतिचारः । श्राद्धेन हि चौरस्थानेषु न वस्तव्यं न प्रविश्यं हिंसोपकारि न देयम् १ । तस्करप्रयोगः, स्तेनानां शम्बलादिसाहाय्यं २ । विरुद्धस्य नृपस्य राज्यं विरुद्धराज्यं तत्रातिक्रमोऽपगमनं लोभात् वैरिराज्ये विक्रयार्थं गतिरित्यर्थः ३ । कूटतुलाकूटमानकरणं तत्रोनं ददतोऽधिकं न लातो दोषः ४ । तत्प्रतिरूपकमिति अन्यं सव्यं वस्तु दर्शयित्वाऽन्यमर्पयतीति तत्प्रतिरूपकव्यवहारः ५ । तत्र घृतादौ तैलादियोगः व्रीह्यादिषु लञ्जीक्षेप इत्यादि च तत्प्रतिरूपकं उच्यते । अत्र दोषा राजदण्डाद्याः । द्यूतिनः श्राद्धयुताः स्थविरी-प्रकरणे जनैः सह गताः । जने गते तैर्गृहं मुष्टं वृद्धा मायया तेषां क्रमयोः प्रत्येकं वारणाय पतन्ती मोरपिच्छेन तत्पादान-निक्षयत् । प्रातर्नृपायोक्तं राज्ञा कथं ते ज्ञेया इत्युक्ते पादाङ्कितास्तयोक्ताः । पुरागमे अङ्केन ते उपलक्षिताः सर्वे धृताः एकः श्राद्धोऽवग् न हराम्यन्यस्वं नाङ्कितश्च । स्तेनैरथोचे एषोऽमन्तुः मुक्तः । अन्ये शिक्षिताः । एवं श्राद्धेन द्यूतगोष्ठ्यामपि न प्रवेश्यं चेत्प्रविशति तदापि हिंसादि न दत्ते न स्तेनमन्त्रे तिष्ठति परभवे धनहीनछिन्नाङ्गादिदोषाः ॥ ३ ॥

परदारगमणं समणोवासओ पच्चक्खाति सदारसंतोसं वा पडिवज्जइ से य परदारगमणे दुविहे पन्नत्ते, तंजहा-ओरालियपरदारगमणे वेउव्वियपरदारगमणे सदारसंतोसस्स समणोवासएणं इमे पंच अइयारा

जाणियव्वा, तंजहा–इत्तरियपरिग्गहियागमणे अपरिगहियागमणे अणंगकीडा परवीवाहकरणे कामभोगतिव्वाभिलासे ४ ॥ ( सूत्रम् )

परदाराऽपरकलत्रं तत्र गमनं आसेवनार्थम् । ततः श्राद्धः प्रत्याख्याति स्वदारेषु सन्तोषं वा प्रपद्यतेऽयं भावः परदारगमननिषेधको यासु परदारशब्दः प्रवर्त्तते तासां नियमं कुर्यात् । स्वदारसंतुष्टस्तु एकानेकस्वदारान् मुक्त्वा सर्वासां निषेधकः । तत्र औदारिकपरदारागमनम् नृतिर्यक्स्त्रीगमनं । वैक्रियपरदारागमनं देवाङ्गनागमनम् । इत्वरपरिगृहीता कालशब्दलोपादित्वरकालपरिगृहीता भाटी(टि)प्रदानेन कियन्तमपि कालं दिनमासादिकं स्ववशीकृता तस्यां गमनम् १ । अपरिगृहीता वेश्याऽन्यसत्कागृहीतभाटिः कुलस्त्रीर्वाऽनाथा तस्यां गमनम् २ । अनङ्गानि मैथुनाङ्गं विनाऽन्यानि कुचकक्षोरुमुखादीनि तेषु क्रीडनमनङ्गक्रीडाऽथवाऽनङ्गक्रीडा कृतरतस्यापि स्वलिङ्गेन तुल्यैर्दारुलेप्यमृत्तिकाचर्मादिघटितगुह्यैः फलेन वा योषिदुपस्थासेवा ३ । स्वापत्यानां विनाऽन्यापत्यानां परेषां विवाहकरणं कन्याफलेच्छया स्नेहेन वा, यतः केऽपि श्राद्धाः स्वापत्यानामपि विवाहं न योजयन्ति। कन्या पत्या मिलतु षण्डो गवा मिलत्वित्यादि भाषापि न कल्प्या ४ । कामाः शब्दरूपगन्धा भोगाः रसस्पर्शास्तेषु तीव्राभिलाषोऽत्यन्ताध्यवसायस्तस्माच्चेदं करोति । समाप्तरतोऽपि योषिन्मुखोपस्थकर्णकक्षान्तरेष्वतृप्ततया लिङ्गं क्षिप्त्वा मृत इवास्ते महतीं वेलां दन्तनखादिभिर्वा मदनमुत्तेजयति वाजीकरणं वोपयुङ्क्ते । योषिल्लिङ्गं वा मृद्नाति । इहाद्यौ अतिचारौ स्वदारसन्तुष्टस्य स्यातां न तु परदारत्यागिनः । शेषा द्वयोरपि । तुर्याणुव्रतपालिनो मातृगमनादयोऽपि दोषाः स्युः। यथा गिरिनगरस्त्रियश्चौरहृताः पारसदेशे विक्रीता वेश्या जाताः, तासां पुत्रा लघवोऽभूवन् वृद्धा मित्रीभूतास्तत्र व्यव-

मार्यं गताः। तत्र देशे श्रीमन्वित्वा माटीं(टिं) दत्त्वा स्थिताः, द्वाभ्यामकृत्यं कृतम्। एकः श्राद्धत्वान्न चक्रे। पृष्टवान् स्त्रीदेशं यावद् ज्ञाता माता। द्वाभ्यां मृतिर्दध्यौ। पारिणामिकीबुद्ध्या त्रयः साधुपार्श्वे प्राव्रजन्। तथा क्वापि भर्त्ता मगर्भपत्न्यां गतः सुता जाता। अन्यपुरे दत्ता संवलमान आयान् सुतापुरे वर्षास्थितः सुतया सह संगतः, वर्षातिक्रमे स्वपुरं गतः। सुतामानायितवान्, सुता तं दृष्ट्वा लज्जिता निवृत्य मृताऽन्यः प्राव्राजीत्। पुनरविरत्या दोषः। एका वेश्या प्रसूता युग्मम्। ततो मा स्नोक्तां माटिं लभे इति द्वे अपत्ये सुतसुतारूपे पुरः पूर्वपश्चिमद्वारयोस्तत्याज। तदा तत्र वणिग्भ्यां मिथो मित्राभ्यां ते द्वे गृहीते, तत्प्रतिचारकदास्यौ गते स्थानं, ततस्ते प्रौढे जाते मिथो विवाहिते। तावता पुत्रो वेश्यायां लग्नः प्रियां नेहते। परं मा माता तेन न ज्ञाता तस्याः पुत्रोऽभूत् वधूस्तु वैराग्यात् प्रव्रज्योत्पन्नावधिर्भिक्षां भ्रमन्ती गता गणिकागृहम्। तत्स्वरूपज्ञापनाय वेश्यापुत्रं गृहीत्वा परावर्त्तयत् जगाद च भ्राता पुत्रो देवरो मम त्वम्। यस्त्वत्पिता स भर्त्ता पिता भ्राता, या ते माता सा मे माता श्वश्रूः सपत्नीति। ततः स भर्त्ता सम्बुद्धो दीक्षितः। यद्वा कोऽपि सोमिलो वणिग्, तत्रान्यवणिग्गृहं प्रतिवेश्म। तत्र सोमिलस्तस्य सौधे काष्ठेनारुह्य तत्स्नुषया सह वसति। एवं काले याति अन्यदा प्रातिवेश्मिकेन जज्ञे। रूढं घृष्टम्। नूनं काष्ठेन कोऽप्यारोहति ततश्चटन् धृष्ट्वा वर्चःकूपे क्षिप्तो मलं भक्षयति मूत्रं पिबति। मेघवृष्टे जलभृताद्वर्चःकूपाज्जलमार्गेण क्षालेन स्वं गृहं गतः विगन्धो वैद्यैः पूर्वरूपः कृतः ततः पुनः पुनः तामैवैच्छत्। एवं त्रीन् वारान्, तुर्यवारायां मङ्कलबद्धो वर्चःकूपे क्षिप्तो मृतः। तथाऽन्येऽपि दोषाः। यथा क्वापि पत्यौ वाणिज्ये गते प्रियाऽन्येन लग्ना, पतिः कतिचिर्द्वर्षैरायान् प्रियास्वरूपज्ञप्त्यै भिक्षुकवेषेण गृहं गतस्तावत् सा भक्ष्यभक्ष्याणि कृत्वोपपतिं

यान्ती तं भिक्षुकं भव्याहारैर्लोभयित्वा तेन भारं ( वाहयित्वा ) वने जारान्तिकेऽनयत् । स तत् प्रियास्वरूपं ज्ञात्वाऽज्ञापयन् महर्द्ध्या गृहमायातो विनयात्पत्न्या सत्कृतो रात्रौ वनगमनवृत्तान्तमपृच्छत् । सा भिक्षुकत्वेऽसाविति निश्चित्य लज्जिता मृता सोऽदीक्षिष्ट । तथा माता लोला सुतः कुगोष्ठीमिलितः । सुतप्रिया पतिमूचे माता भ्रमन्त्यस्ति । सोऽश्रद्दधानो मात्रा गोष्ठ्या सह निशि देवकुले तमसि रेमे । मातृपुत्रयोर्वस्त्रविपर्यासे प्रिययोक्तम् । कस्याः स्त्रिय आच्छादनवस्त्रं त्वयात्तम् ? ततो मातुर्ज्ञात्वा नष्टो दीक्षितः । भवान्तरे दोषाः क्लैब्यकुरूपवियोगाद्याः, गुणा इह यथा आनन्दपुरे द्विजो मूलेश्वर उपवासांश्चक्रे। अहं भक्तं ददे पात्राय देवेन वारद्वयं उक्तम् । कच्छे आभीराभीर्यौ श्राद्धे तद्दानेऽक्षयं फलम् । स तत्र गत्वा ताभ्यां भक्तं दक्षिणां च दत्त्वाऽप्राक्षीत् । किं युवयोस्तपः ? येन सुराच्र्यता, ताभ्यामूचे एकान्तरं ब्रह्मव्रतमात्तम् । विवाहे द्वयोरन्योन्याहब्रह्मणो (व्रतं) जातम् । ब्रह्मण्येव वार्द्धक्यं जातम् । कुमारत्वे द्विजः सुबुद्धोऽर्हद्धर्म्मं ललौ प्रेत्य स्वर्गसुनृत्वादि ॥ ४ ॥

**अपरिमियपरिग्गहं समणोवासओ इच्छापरिमाणं उवसम्पज्जइ, से परिग्गहे दुविहे पन्नत्ते, तंजहा–सचित्तपरिग्गहे अचित्तपरिग्गहे य, इच्छापरिमाणस्स समणोवासएणं इमे पंच अइयारा जाणियव्वा, तंजहा–खित्तवत्थुपमाणाइक्कमे हिरन्नसुवन्नपमाणाइक्कमे धणधन्नपमाणाइक्कमे दुपयचउप्पयपमाणाइक्कमे कुवियपमाणाइक्कमे ५ ॥ ( सूत्रम् )**

अपरिमितोऽपरिमाणः स चासौ परिग्रहोऽपरिमितपरिग्रहः तं श्राद्धः प्रत्याख्याति । इच्छापरिमाणं सचित्तादिगोचरेच्छापरिमाणम् । क्षेत्रवास्तुप्रमाणातिक्रमः । तत्र सस्योत्पत्तिभूः क्षेत्रं क्षीयतेऽत्र बीजमिति व्युत्पत्तेः । तच्च सेतुकेतुभेदाद् द्विधा,

तत्र सेतुक्षेत्रमरघट्टादिसेक्यं, केतुक्षेत्रं त्वाकाशपतितोदकनिष्पाद्यम् । उप्यतेऽत्रेति वास्तु गृहम् । तत्त्रिधा खातं उत्सृतं खातोत्सृतं
च । तत्र खातं भूमिगृहादि । उत्सृतं प्रासादादि । खातोत्सृतं भूमिगृहोर्ध्वं प्रासादः । एषां क्षेत्रवास्तूनां प्रमाणातिक्रमः प्रत्या-
ख्यानकालगृहीतप्रमाणोल्लङ्घनम् १ । हिरण्यसुवर्णप्रमाणातिक्रमः तत्र हिरण्यं रजतमघटितं घटितं च द्रम्मादि, एवं सुवर्णमपि ।
तयोः प्रमाणातिक्रमः मार्यादीनामायत्तताकरणेन २ । धनधान्ययोर्लभ्ययोः स्थाप्यकरणेन समर्घयोर्वा सत्यङ्कारदानेन । वर्षावधिपूर्णौ अग्रेतनं मूढकेषु वा व्यापृतेषु ग्रहीष्ये इति चिन्तया सुवर्णग्रहणाद्यपि ज्ञेयम् । धनं गणिमं पूगादि १ धरिमं मञ्जिष्ठादि
२ मेयं घृतादि ३ परिच्छेद्यं च मण्यादि ४ । धान्यं स्पष्टं ३ । द्विपदा दास्याद्या मोराद्याश्च चतुष्पदाः ४ । कुप्यमासनशयन-
भोजनपरिवेषणस्नानाद्युपभोगहेतुवस्तुजातं वस्त्राणि च तत्प्रमाणातिक्रमः । यथा प्रागन्यद्रम्मैः कुप्यं चिन्तितं स्यात्ततो
धनवृद्धौ द्रम्मपरावर्त्तं कुर्यात् स्थालादीनां वाऽन्यनामतां कुर्यात् ५ । एतान्यणुव्रतानि ॥ ५ ॥

अणुव्रतानां पालनाय गुणकारीणि गुणव्रतान्युच्यन्ते, यथा—

दिसिवए तिविहे पन्नत्ते उड्ढदिसिवए अहोदिसिवए तिरियदिसिवए, दिसिवयस्स समणोवासएणं
इमे पञ्च अइयारा जाणियव्वा, तंजहा—उड्ढदिसिपमाणाइक्कमे अहोदिसिपमाणाइक्कमे तिरियदिसिपमा-
णाइक्कमे खित्तवुड्ढी सइअंतरद्धा ६ ॥ ( सूत्रम् )

व्रतं नियम उच्यते, ऊर्ध्वदिग्व्रतं एतावती दिगूर्ध्वं पर्वताद्यारोहणादवगाहनीया न परत इत्येवम्भूतम् १ । अधोदिग्व्रतं
एतावती दिगधः वाप्याद्यवतरणादवगाह्येति २ । तिर्यग्दिग्व्रतं इयती दिग् पूर्वेणावगाह्या इयती दक्षिणेनेत्यादि न परत इति

३। अस्मिन् व्रते आत्ते तिर्यग्दिग्वहिस्थजन्तूनां हिंसा न स्यादिति गुणः। एषां नियमानां प्रमाणातिक्रमो नियमितभुव ऊर्ध्वं चलने। तत्र ऊर्ध्वं स्वमानगिर्यारूढो द्रुफलानि पक्ष्यात्तभूषादि स्वतः पतितं लाति न तु यत्नं कुर्यात्। क्षेत्रवृद्धिरित्येकतो योजनशतं नियमितं परतो दशयोजनानीति। तत्र कार्योत्पत्तौ विस्तीर्णदिशो योजनानि संकीर्णदिशि क्षिप्त्वाऽगात् ततः समं क्षेत्रं करोति ४। स्मृतेरन्तर्द्धानं भ्रंशः स्मृत्यन्तर्द्धानम्। यथा के मया नियमा आत्ताः सन्तीति स्मृतेरकृतिः। स्मृतिमूलं च नियमानुष्ठानं ततः स्मृतिभङ्गे नियमभङ्ग इत्यतिचारः ५। यद्वा सति लाभेऽन्तर्द्धानं स्वगोपनेन परेण देशान्तरगमनम्। वहुलोभे दोषः लोभनन्दिवत्। गुणे एकाकिनी स्त्री भर्त्तरि गते क्षुधिता रत्नानि विक्रीणती श्राद्धेन वहुमूल्यानि दृष्ट्वा अनात्तेषु परेण यथेच्छमात्तेषु पत्यावैते रत्नमूल्याधूचे स नृपायोचे कूटमूल्यकृदयमिति स राज्ञा हतः श्राद्धोऽपूजि। द्वितीयं गुणव्रतमाह–

उवभोगपरिभोगवए दुविहे पन्नत्ते, तंजहा–भोअणओ कम्मओ अ। भोअणओ समणोवासएणं इमे पञ्च अइयारा जाणियव्वा, तंजहा–सचित्ताहारे सचित्तपडिबद्धाहारे अप्पउलिओसहिभक्खणया दुप्पउलिओसहिभक्खणया तुच्छोसहिभक्खणया। कम्मओ णं समणोवासएणं इमाइं पन्नरस कम्मादाणाइं जाणियव्वाइं, तंजहा–इंगालकम्मे वणकम्मे साडीकम्मे भाडीकम्मे फोडीकम्मे दंतवाणिज्जे लक्खवाणिज्जे रसवाणिज्जे विसवाणिज्जे, केसवाणिज्जे जंतपीलणकम्मे निल्लंछणकम्मे दवग्गिदावणया सरदहतलायसोसणया असईपोसणया ७॥ (सूत्रम्)

उपशब्दः सकृदर्थेऽन्तर्भोगे च, तत उपभोग आहारादेः। परिशब्द आवृत्तौ पुनः पुनरर्थे बहिर्भोगे वा ततः परिभोगो वस्त्रादेः, द्वयोर्विषयं उपभोगपरिभोगव्रतम् । तत्र भोजनत उत्सर्गेण श्राद्धोऽपि निरवद्यप्रासुकभोजी अशक्तौ सचित्तवर्जको वा स्यात्, अपवादतोऽनन्तकायबहुबीजपृथ्वीकायतुच्छौषधितुच्छफलविवर्जकः स्यात् । अशनेऽनन्तकायं आर्द्रकमांसादि, पाने रसकं मद्यादि, खादिमे उदुम्बरादिफलादि, स्वादिमे मध्वादित्यजनम् । उपपरिभोगे 'उल्लणविहि दंतणविहि अब्भंगणवि० फलवि० तिल्लवि० उव्वलणवि० मज्जणवि० वत्थविलेवणभूसणपुप्फ(प्फ)धूवभोयणपिज्जखज्जगसूअनेहमाहुरसागाजेमणपाणिय-मुहवासइत्यादिनियमाश्चिन्त्याः। 'उल्लणं' क्लिन्नाङ्गरूक्षणवस्त्रं गन्धकाषायादि 'उव्वलणं' पीठिकादि, सूपो दालिः, जेमनं वटकादि, तत्रानाभोगादिना सचित्तादिभोगेऽतिचारः। अथ कर्म्मतः कर्म्म व्यापारस्तदाश्रित्य, असावद्यव्यापारेण मुख्यतो भाव्यं अशक्तौ महासावद्यत्यागः कार्यः।

तत्र भोजनतो भोजनमाश्रित्य सह चित्तेन जीवेन वर्त्तते इति सचित्तः स चासावाहारश्च सचित्ताहारः नियमाधिकस-चित्तादानं १। सचित्तेन प्रतिबद्ध आहारो यथा वृक्षप्रतिबद्धो गुन्दादि पक्वफलानि वा २। अपक्वौषधयश्च नखदलिक-कणिकाद्या अपरिणतास्तासां भक्षणताऽचित्तधिया ३। दुष्पक्वौषधयोऽर्द्धपक्वफलिकापृथुकशाकादिरूपाः ४। तुच्छौषधयो मुद्गफल्याद्या अमारास्तासां भक्षणेनाहारः, क्वापि राजाश्ववाहनिकां गतो नरं फलिका अदन्तं गच्छन् आयांश्च दृष्ट्वा अहोऽयमेयत्कालं खादने कियन्मध्ये सारमभूदिति परीक्षार्थं जनैस्तत्कुन्दमदारयत्दुग्धफेनमेवाद्राक्षीत्ततो येषां फलिकाकोमल-पृथुकादीनां भक्षणे घना विराधनाल्पा च तुष्टिः तत्तुच्छफलम् । तथा 'पुप्फफलेहिं रसेहि य बहुतसपाणेहिं अजयत्ताणेहिं ।

मज्जेहिं य मंसेहि य विरमेज्जा अत्तहियकामो ॥ १ ॥ जत्थत्थि सत्तपीला उवभोगो थोवओ य तहियं तु । कुज्जा नाइपसंगं सेसेसु वि सत्तिओ निउणं ' ॥ २ ॥ शेषेष्वपि श्राद्धाचीर्णेष्वप्यारम्भेष्वतिप्रसङ्गं न कुर्यात् ।

अथ कर्म्मतः, कर्म्मादानानीति अन्यारम्भेभ्यो बहुज्ञानावरणादिकर्म्मबन्धहेतुत्वादादानानि कर्म्मादानानि । अङ्गारकर्म्म अग्निज्वालनोत्थव्यापारो लाभार्थम् १ । वनकर्म्म वनस्पतिकायवृक्षदारुवंशकटादितृणादिफलपुष्पपत्रच्छेदविक्रयकणदलनाद्यारम्भो लाभार्थमिति सर्वत्र ज्ञेयं २ । शकटेन जीवनं शकटाङ्गविक्रयः शकटकर्म्म उपलक्षणाद्यानपात्राङ्गादिविक्रयश्च शकटकर्म्म ३ । भाटकार्थं शकटाश्वगवादिदानं भाटकेन वस्तुवहनं शकटादिना भाटककर्म्म ४ । हलखेटनभूस्फोटनाश्मघट्टनादिना वृत्तिः स्फोटकर्म्म ५ । आकरे दन्तकेशमुक्तानखादिजल्पनं तद्ग्रहणं दन्तवाणिज्यं ६ । लाक्षामनःशिलादिवाणिज्यं कृम्यादिघाताय ७ । म्रक्षणादितापनं मधुमद्यादिविक्रयो रसवाणिज्यं ८ । विषशस्त्रहलहरितालादिजन्तुघातकवस्तुविक्रयो विषवाणिज्यं ९ । द्विपदचतुष्पदविक्रयः केशवाणिज्यं केशशब्देन पञ्चेन्द्रिया ज्ञेयाः १० । अरघट्टकादिकरणं यन्त्रपीडनकर्म्म ११ । पशूनां शोभाद्यर्थं दाहवेधादिकृतिर्निर्लाञ्छनम् १२ । धान्याद्यर्थं दवदापनं १३ । सरोह्रदतटाकानां धान्याद्यर्थं वैरिसैन्यदुःखार्थं शोषणं सारणिवाहनं सरोह्रदतटाकशोषणता १४ । असती घोटकादिका तासां पोषणं घोटकाद्यर्थं एवं दास्यादिपोषः तथा गृहरक्षायै श्वादिपोषः क्रीडाद्यर्थं शुकादिपोषः एतदप्यसतीपोषशब्देन ज्ञेयं १५ । एवं पञ्चदशानां कथनादन्येषामप्येवंजातीयानां बहुसावद्यकर्म्मणां त्यागः कार्यः ॥ ७ ॥

**अणत्थदंडे चउव्विहे पन्नत्ते, तंजहा—अवज्झाणायरिए पमत्तायरिए हिंसप्पयाणे पावकम्मोवएसे,**

अणत्थदंडवेरमणस्स समणोवासएणं इमे पञ्च अइयारा जाणियव्वा, तंजहा-कंदप्पे कुक्कुइए मोहरिए
संजुत्ताहिगरणे उवभोगपरिभोगाइरेगे ८ ॥ ( सूत्रम् )

अर्थः कार्यं गृहिणः क्षेत्रवास्तुधनधान्यदेहादिविषयम् । तस्मै आरम्भो भूतोपमर्दोऽर्थदण्डः । अनर्थोऽकार्यो(र्यं) भूतानि
दण्ड्यते हिनस्तीत्यनर्थदण्डः । यथा मत्तस्तरुं प्रहरति तत्स्थजन्तून् हन्ति इत्यादि । तत्र अपध्यानं दुर्ध्यानं वैरिघातकऋद्धि-
प्रार्थनादि तस्याचरितं आचरणं १ । प्रमादो मद्यादिस्तेन तस्य वाचरितं २ । हिंसाहेतुशस्त्राग्निविषादिदानं हिंसाप्रदानं ३ ।
पानयति दुर्गताविति पापकर्म्म तस्योपदेशो यथा कृष्यादि कुर्वित्यादि, अलं पासायखंभाणं इत्यादि च ४ । कन्दर्पो विषय-
रागात् प्रहासमिश्रं मोहोद्दीपकं नर्म, यतः श्राद्धोऽट्टहासं न कुर्यात् ईषद् हसेत् कार्ये सति १ । कौत्कुच्यमनेकधा मुखा-
क्षिपदप्रभृतिचेष्टापूर्विका हासादिजनिका भण्डक्रिया २ । मौखर्यं धार्ष्ट्यं प्रायमसत्यमसम्बद्धप्रलापित्वम् ३ । संयुक्ता-
धिकरणं मुशलोदूखलादिसंयोजनम् । संयुक्तं च तदधिकरणं चेति समासः ततः संयुक्तानि शकटादीनि न धार्याणि ४ ।
उपभोगपरिभोगयोग्यद्रव्याणामाधिक्यकरणम् । यतः श्राद्धः स्नानताम्बूलाद्यर्हवस्तूनि तावन्ति न लायाद्यावन्त्यन्योऽप्यादाय
प्रमादि विराधयति । पुष्पादीन् त्रसांश्च त्यजेत् ५ । निषिद्धानर्थदण्डस्यैतेऽतिचाराः ॥ ८ ॥ उक्तं तृतीयं गुणव्रतम् ।

अथ चत्वारि शिक्षाव्रतानि । शिक्षा नाम पुनः पुनरभ्यासः, यतः सामायिकदेशावकाशिकादीनि पुनः पुनः क्रियन्ते ।
सामाइअं नाम सावज्जजोगपरिवज्जणं निरवज्जजोगपडिसेवणं च । सिक्खा दुविहा गाहा उववायठिई
गई कसाया य । बंधंता वेयंता पडिवज्जाइक्कमे पंच ॥ १ ॥ सामाइअंमि उ कए समणो इव सावओ

हवइ जम्हा । एएण कारणेणं बहुसो सामाइयं कुज्जा ॥ २ ॥ सव्वं ति भाणिऊणं विरई खलु जस्स सव्विया नत्थि । सो सव्वविरइवाई चुक्कइ देसं च सव्वं च ॥ ३ ॥ सामाइयस्स समणोवासएणं पञ्च अइयारा जाणियव्वा, तंजहा–मणदुप्पणिहाणे वइदुप्पणिहाणे कायदुप्पणिहाणे सामाइयस्स सइअकरणया सामाइयस्स अणवट्ठियस्स करणया ९ ॥ ( सूत्रम् )

सावद्यः सपापः योगो व्यापारः तस्य परिवर्जनं सावद्ययोगपरिवर्जनं कालावधिनेति, निरवद्ययोगानां निरवद्यव्यापाराणां परिसेवनं आसेवनं च । समो रागद्वेषवियुक्तो जन्तुस्तस्य आयो लाभः प्रतिक्षणं वर्द्धमानानां ज्ञानदर्शनचरणानां समायः । समाय एव कार्यमस्येति सामायिकं । तं सावएण कहं कायव्वं ? इह सावगो दुविहो इड्ढिपत्तो अणड्ढिपत्तो य, ऋद्धिप्राप्तः अनृद्धि(प्राप्त)श्चेत्यर्थः । जो सो अणड्ढिपत्तो सो चेइयघरे साहुसमीवे घरे पोसहसालाए वा जत्थ वा वीसमइ अच्छइ निव्वावारो सव्वत्थ करेइ सव्वं चउसु ठाणेसु नियमा कायव्वं । अत्र सर्वशब्देन सर्वं षडावश्यकं इति वृद्धा व्याख्यान्ति । चेइयघरे साहुमूले पोसहसालाए घरे आवस्सयं करेंतो त्ति । यदि धरणादिभीः स्यात्तदा साधुसकाशे न करोति । ताहे घरे चेव सामाइयं काऊण उवाहणाओ मोत्तूण सचित्तदव्वविरहिओ वच्चइ । तत्रानुक्तोऽपि श्रीभगवत्याद्युक्तः श्राद्धस्य साधुपार्श्वे गमे पञ्चविधाभिगमो ज्ञेयः । पंच समिओ तिगुत्तो । ईरियाए उवउत्तो जहा साहू भासाए सावज्जं परिहरन्तो एसणाए कट्ठं लेट्ठुं वा पडिलेहेत्तु पमज्जिउं, एवं आयाणे निक्खेवणे खेले सिंघाणे न विगिंचति विगिंचंतो वा पडिलेहिय पमज्जिय थंडिले, जत्थ चिट्ठइ तत्थ गुत्तिनिरोहं करेइ । एयाए विहीए गन्ता तिविहेण नमिऊण साहुणो पच्छा साहुसक्खियं सामाइयं करेइ । अत्र श्राद्धस्य शालागमसाधु-

नवमव्रत-
स्वरूपमति-
चाराश्च ।

वन्दनादौ मुद्रा चिन्त्या । करेमि भंते ! सामाइयं सावज्जं जोगं पच्चक्खामि दुविहं तिविहेणं जाव साहू पज्जुवासामि त्ति काऊणं । अत्र दुविहं तिविहेणं ति पदविपर्यासं पुरःसंक्षेपनधिया सावज्जंजोगंशब्दविशेषणज्ञापनाय घटते तत्त्वेवं पाठः । जइ चेइआइं अत्थि तो पढमं वन्दइ, अत्र प्रथमशब्दाच्चैत्याभावे पश्चाच्चैत्यानि वन्दते इति वृद्धाः । साहूणं सगासाओ रयहरणं निसिज्जं वा मग्गइ, अह घरे तो से उग्गहियं रयहरणं अत्थि तस्स असइ पोत्तस्स अंतेणं । अत्र रजोहरणमार्गणं अथ न रजोहरणाभावे पोतस्य वस्त्रस्यान्तेनेति यदुक्तं तत्किमर्थं ? भूप्रमार्जनार्थं वा धर्मध्यानकरणार्थं वाऽन्यहेतवे वा तच्चिन्त्यम् । तथा रजोहरणशब्दोऽत्र मोरपिच्छरजोहरणार्थो घटतेऽन्यधर्मध्वजदारुदण्डादि चिन्त्यमानं न सङ्गतिमङ्गति । पच्छा इरियावहियं पडिक्कमइ पच्छा आलोएत्ता वन्दइ । आगमनं आलोच्य द्वादशावर्त्तवन्दनं दत्ते इति वृद्धाः । आयरियादी अहारायणियाए यथाज्येष्ठमित्यर्थः । पुणो वि गुरुं वंदित्ता पडिलेहित्ता निविट्ठो पुच्छइ पढइ वा, एवं चेइएसु वि । अत्र चैत्येष्वपीत्यतिदेशः सम्यक् चिन्त्यः, असइ साहुचेइआणं पोसहसालाए सगिहेव सामाइयं आवस्सयं वा करेइ । अत्र वाशब्द-श्चार्थे । यद्वा अशक्तः केवलसामाइकदण्डकं उक्त्वा तिष्ठतीति वृद्धाः । तत्थ भणइ जावनियमं समाणेमि परमयं पाठो न श्रूयते । जो इड्ढिपत्तो सो एंतो सव्विड्ढिए एइ तो जणस्स अत्था होइ, अनेन वाक्येनैवं ज्ञायते यथा जनास्था वृद्धिस्तथा न दोषः । आढिया य साहुणो सप्पुरिसपरिग्गहेणं । साधवः सत्पुरुषपरिग्रहेण सत्पुरुषाणां वन्दनाद्याग्रहेण आदृताश्च जनमान्याः स्युस्तेन श्राद्धैर्गुरूणां अभिग्रहादिभावद्रव्यस्तवः क्रियते तद्युक्तं इति वृद्धाः । जइ सो कयसामाइओ एइ ताहे आसहत्थि-माइणा जणेण य अधिगरणं पवत्तइ । ताहे न करेइ । सामायिकं गृहे कृत्वा नायातीत्यर्थः । कयसामाइएण पाएहिं

आगंतव्वं। तेण न करेइ। कृतसामायिकस्योपानत्याग एव लोकाद्विशिष्ट उक्तः न तु प्रावरणमोचनादि। अत्र सामायिकनिषेधोऽपि दोषाय न गणितः व्यवहारादिनयप्रामाण्यात्। आगओ साहुसमीवे करेइ। जइ सो सावगो तो न कोइ उट्ठेइ। अह अहाभद्दउ त्ति पूया कया होइ त्ति। अथ भद्रक एवास्ति राजा तेन पूजा कृता वीक्ष्यते। ताहे पुव्वरइयं आसणं करेइ। गुरूणां पूर्वरचितं आसनं क्रियते। आयरिया उट्ठिया य अच्छंति। उत्थितास्तिष्ठन्ति। स सामाइयं काऊण पडिक्कंतो वंदित्ता पुच्छइ। अत्र वन्दित्वा कृतिकर्म्मणेति घटते। सो य किर सामाइयं करिंतो मउडं न अवणेइ मुकुटं नापनयति न मुञ्चेत्। कुण्डलाइनाममुद्दं पुप्फतंबोलपावारगमाइ वोसिरइ। अत्र प्रावारकादीनिशब्देन अप्रतिलेख्यवस्त्रपञ्चकमध्यस्थं पल्हवि(वी)कोयव(वि)पावार इति प्रावारनामकं झीलाच्छाटडाप्रभृति त्यजति यथा साणीपावारपिहियं। अत्र प्रावारशब्दार्थः न तु प्रावार इत्युत्तरासङ्गः, यतः सिद्धान्ते प्रावारशब्देनोत्तरासङ्गः क्वापि न व्याख्यातः। अन्ने भणन्ति मउडं पि अवणेइ। एसा विही सामाइयस्स। अत्र सामायिकशब्देन सर्वावश्यकनिगमनं ज्ञेयम् इति वृद्धाः, नो चेदमुना विधिना सामायिकं कोऽपि कुर्वन्नन्यगच्छेषु नोपलभ्यते। सव्वं चउसु ठाणेसु नियमा कायव्वं ति। यदा पूर्वोक्तस्थानपञ्चकमध्याच्चैत्यादिषु चतुर्षु स्थानेषु सामायिकं करोति तदा नियमादावश्यकं सर्वमपि षड्विधमपि करोमीति। ननु सर्वमिति विशेषणं तस्य चावश्यकं विशेष्यत्वेन कथं लभ्यते? उच्यते केवलस्य श्रावकसामायिकस्य सर्वमिति विशेषणस्यासम्भवात्। उत्तरत्र चानन्तरमेव आवस्सयं करिंतो त्ति इत्यादिनावश्यकविधेर्वक्ष्यमाणत्वादावश्यकमिति विशेष्यं संगच्छत एव। आवासयं करिंतो

त्ति आवश्यकशब्देन केवलमेव सामायिकमिति न वाच्यं, यतो निरुपपदेनावश्यकशब्देनाध्ययनषट्कमेवोच्यते, तथाहि 'आवस्सयं अवस्सकरणिज्जं धुवनिग्गहो विसोही य। अज्झयणछक्कवग्गो नाओ आराहणामग्गो' ।१। अनुयोगद्वारे। 'आवासं काऊणं'। आचा० निर्यु०। यदा प्रथमादिविशेषणमावश्यकस्य तदैकैकं लभ्यतेऽन्यथा तु षट्कमेवेति। तथा 'आवासयं करिंतो त्ति' त्यत्र इतिशब्दः प्रस्तावनार्थः यथा 'कहं वयामो त्ति तत्थ उव्वया'। ओघ० नि०। 'मित्ति मिउमद्दवत्ते' गाथाद्वये स्थानषट्के इतिशब्दाः प्रस्तावनार्थाः। 'आव०' अत एव चउसु ठाणेसु नियमा कायव्वं इत्यादिपदानां श्रीमदभयदेवसूरिभिरप्येवं पदयोजना कृता तद्यथा चतुर्षु स्थानेषु पुनर्नियमात्करोति चैत्यगृहे साधुसमीपे पौषधशालायां स्वगृहे वावश्यकं कुर्वाणस्तत्र यदि साधुसमीपे करोति तत्रायं विधिरिति प्रथमपञ्चाशकवृ०। तथावश्यकं कुर्वाणस्तत्र यदि साधुसमीपे करोति तत्रायं विधिरित्येतेन वाक्येनास्य उत्तरग्रन्थेन सह सम्बन्धं कुर्वतोऽस्यायमाशयो लक्ष्यते। पुनः कश्चिदाह नन्वस्मिन् दण्डके सामायिकस्य प्रस्तुतत्वात् पर्यन्ते च 'एसा विही सामाइयस्स' इति भणनाच्च कथमन्तरा षडावश्यकमापतितमिति चेदुच्यते 'सव्वं चउसु ठाणेसु नियमा कायव्वमि'त्यादिवाक्यात् यदि च सामायिकमेवात्र केवलं निर्वाण(ह्य) स्यात्तदा 'जत्थ वा वीसमइ अच्छइ वा निव्वावारो करेइ' इत्येतत्पदानन्तरं 'तत्थ जइ साहुसगासे करेइ तत्थ का विही' इत्येवं पठितं स्यात्, न पुनः 'सव्वं चउसु ठाणेसु इत्यादिकं आवस्सयं करिंतो त्ति' तत्पर्यन्तं मध्यवाक्यमिति। अपरं च सामायिकस्य प्रस्तावना 'तं सावएण कहं कायव्वमि'त्यनेनैव पदेन कृता, तत् किं पुनरपि तस्यैव प्रस्तावनार्थं 'आवस्सयं करिंतो त्ति' पठ्यते? तस्मादेते(तेन) षडावश्यकमेव प्रस्तावयत इत्यवबुध्यते। किञ्च यद्यत्र सामायिकस्यैव विधिः स्यान्न पुनः षडावश्यकस्य ततः 'ताहे घरे चेव सामाइयं

आगंतव्वं। तेण न करेइ। कृतसामायिकस्योपानत्त्याग एव लोकाद्विशिष्ट उक्तः न तु प्रावरणमोचनादि। अत्र सामायिकनिषेधोऽपि दोषाय न गणितः व्यवहारादिनयप्रामाण्यात्। आगओ साहुसमीवे करेइ। जइ सो सावगो तो न कोइ उट्ठेइ। अह अहाभद्दउ त्ति पूया कया होइ त्ति। अथ भद्रक एवास्ति राजा तेन पूजा कृता वीक्ष्यते। ताहे पुव्वरइयं आसणं करेइ। गुरूणां पूर्वरचितं आसनं क्रियते। आयरिया उट्ठिया य अच्छंति। उत्थितास्तिष्ठन्ति। स सामाइयं काऊण पडिक्कंतो वंदित्ता पुच्छइ। अत्र वन्दित्वा कृतिकर्म्मणेति घटते। सो य किर सामाइयं करिंतो मउडं न अवणेइ मुकुटं नापनयति न मुञ्चेत्। कुण्डलाइनाममुद्दं पुप्फतंबोलपावारगमाइ वोसिरइ। अत्र प्रावारकादीनिशब्देन अप्रतिलेख्यवस्त्रपञ्चकमध्यस्थं पल्हवि(वी)कोयव(वि)पावार इति प्रावारनामकं झीलाच्छाटडाप्रभृति त्यजति यथा साणीपावारपिहियं। अत्र प्रावारशब्दार्थः न तु प्रावार इत्युत्तरासङ्गः, यतः सिद्धान्ते प्रावारशब्देनोत्तरासङ्गः क्वापि न व्याख्यातः। अन्ने भणन्ति मउडं पि अवणेइ। एसा विही सामाइयस्स। अत्र सामायिकशब्देन सर्वावश्यकनिगमनं ज्ञेयम् इति वृद्धाः, नो चेदमुना विधिना सामायिकं कोऽपि कुर्वन्नन्यगच्छेषु नोपलभ्यते। सव्वं चउसु ठाणेसु नियमा कायव्वं ति। यदा पूर्वोक्तस्थानपञ्चकमध्याच्चैत्यादिषु चतुर्षु स्थानेषु सामायिकं करोति तदा नियमादावश्यकं सर्वमपि षड्विधमपि करोमीति। ननु सर्वमिति विशेषणं तस्य चावश्यकं विशेष्यत्वेन कथं लभ्यते? उच्यते केवलस्य श्रावकसामायिकस्य सर्वमिति विशेषणस्यासम्भवात्। उत्तरत्र चानन्तरमेव आवस्सयं करिंतो त्ति इत्यादिनावश्यकविधेर्वक्ष्यमाणत्वादावश्यकमिति विशेष्यं संगच्छत एव। आवासयं करिंतो

कायव्वमाह सवे को दोसो ?
कचुम्यां च इत्थमेव व्याख्यातं, तथाहि 'गिहिणो वि सव्ववज्जं दुविहं तिविहेण छिन्नकालं तं। सर्वशब्दोच्चारणरहितं
ममए पुमई'। १। भाष्यं। गृहस्थेनापि मता तत्सामायिकं छिन्नकालं द्विघटिकाकालमानोपेतं सर्ववज्जं
द्विविधं त्रिविधेन कर्त्तव्यमेवेति वृत्तिः।

जइ चेइआइं अत्थि तो पढमं वन्दइ। अत्र प्रथममिति भणनात् सामायिके कृते पश्चादपि चैत्यवन्दना कार्येति।
अन्यथा जइ चेइआइ अत्थि तो वन्दइ इत्युक्तमेव स्यात्। तथा चैतत्सामायिकं सर्वकालमपि स्यात्। मुहूर्त्ताधिकं च न
स्यात्तदा कथं सामायिकं कृत्वा साधुपार्श्वे याति ? स्तोककालात् कृत्वा पारयित्वा च किं न याति ? तेनैवं ज्ञायते प्रातः
सायमेकैकमेव बहुकालं यावत्सामायिकं स्यात्ततश्च गुरुसाक्ष्युच्चरति। चेत्परम्परागतः श्राद्धावश्यकविधिरेवमभविष्यत्तदा ज्ञायते
सिद्धान्तोक्तोऽयमिति। रयहरणं निसिज्जं वा मग्गइ, भूप्रमार्जनाय मयूरपिच्छादिमयं दंडामनाख्यं रजोहरणं निषद्यां वा
याचते इति। अन्य युक्तिस्तु प्राक् मुखवस्त्रिकाधिकारे सर्वा समर्थितास्ति। तथा पच्छा आलोइत्ता वन्दइ त्ति, आगमनं
आलोच्य द्वादशावर्त्तवन्दनं ददाति। वन्दतेशब्देन आगमे द्वादशावर्त्तवन्दनमुच्यते इति प्राग् दर्शितमस्ति।

'सामाइयं आवस्सयं वा करेइ त्ति' इह तावत् 'सव्वं चउसु ठाणेसु नियमा कायव्वमित्यादिना' आवश्यकविधानस्थान-
संग्रहं कृत्वा ततस्तस्यैव तेषु चतुर्ष्वपि स्थानेषु विधीयमानस्य 'आवस्सयं करिंतो त्ती' त्यादिना 'एसा विही सामाइयस्स'
एतत्पर्यन्तेन ग्रन्थेन समग्रोऽपि विधिरुक्तः। तत्रापि जइ साधुसगासे करेइ इत्यादिना पुच्छइ पढइ इत्यन्तेन साधुमूले
विधीयमानस्यामूलचूलं विधिरुक्तः, ततस्तस्यैव साध्वभावे चैत्यगृहे विधीयमानस्य 'एवं चेइएसु वि' इत्यन्तेन पूर्वप्रदर्शित

काऊण' एतावतापि पूर्वकालभणनेन सामायिकानुष्ठानस्य समर्थितत्वात्, तदुत्तरग्रन्थोक्तस्तु विधिः किमर्थ इति? अथ गुरुभक्तिप्रतिपादनार्थ इति चेत् तदपि न, यतोऽयमेवानुष्ठानविधिश्चैत्ये पौषधशालायां गृहे वातिदेक्ष्यत इति। तथा यच्च पर्यन्ते 'एसा विही सामाइयस्स' इत्युक्तं तदपि न षड्विधावश्यकस्य बाधकं यतो यथा कायोत्सर्गनिर्युक्तौ कायोत्सर्गं प्रस्तूयान्तरा च प्रसङ्गागतं साधूनामावश्यकविधिमभिधाय पुनः कायोत्सर्गस्य निर्वाहः कृतस्तथाऽत्रापि सामायिकव्रते व्याख्यायमाने प्रस्तावात् सामायिकादिकं श्रावकस्य षडावश्यकमभिधाय पुनः सामायिकस्य निगमनं कृतमिति सम्भावयामः। तथा 'ताहे घरे चेव सामाइयं काऊणं ति' साधूपाश्रये गच्छतो मा कालातिक्रमः सामायिकस्य भवत्विति हेतोर्गृह एव एकमेव सामायिकसूत्रमुच्चार्य शेषानुष्ठानं तत्रैव करिष्यामीति विचिन्त्य साधूपाश्रये व्रजतीति सम्बन्धः। अथ सर्वमप्यनुष्ठानं गृहे कृत्वा किं न गच्छतीति[चेत्] उच्यतेऽत्र साधुमूलानुष्ठानस्य प्रस्तुतत्वात्। गृहानुष्ठानमार्गं(मग्रे) चतुर्थस्थाने वक्ष्यति। अतोऽत्र सामायिकसूत्रमात्रोच्चारणमेवावबुध्यते इति। 'करेमि भंते सामाइयमित्यादि'

ननु आचरणां विना कुतः श्रावकसामायिकसूत्रं लभ्यते? उच्यते यतिश्रावकयोः सामायिकसूत्रमेव, केवलं सर्वमिति, जावज्जीवा इति, तिविहं तिविहेणं ति, करंतं पीत्यादि विशेषाश्चत्वारः, ते च चूर्णिकृता 'करेमि भंते! सामाइयं, सावज्जं जोगं पच्चक्खामि, दुविहं तिविहेणं जाव साहू पज्जुवासामी'त्येवं भणता त्रयः साक्षादेव दर्शिताश्चतुर्थोऽपि 'दुविहं तिविहेणं' ति भणनाल्लब्ध एव। ततश्चैतद्विशेषचतुष्टयविशेषितं यतिसामायिकसूत्रमेव श्रावकोऽपि भणतीति। अयं चार्थः—'सावज्जजोगपरिवज्जणट्ठा सामाइयं केवलियं पसत्थं' इत्यस्या निर्युक्तिगाथाया व्याख्याने भाष्यमहोदधिना वृत्ति-

विकल्पितमेतदिति । यतः श्रीअभयदेवसूरिणाप्ययमेव 'पडिकंत' इतिशब्द इत्थमेव व्याख्यातस्तथाहि एवं सामायिकं कृत्वा ईर्यापथं प्रतिक्रान्तो वन्दित्वा पृच्छति पठति वा । प्रथमपञ्चाशके । तथा पुप्फ(प्फ)तम्बोलपावारगमाइ वोसिरइ त्ति, अत्र पावारगशब्देन दुष्प्रत्युपेक्ष्यो वस्त्रविशेषो ज्ञेयो न पुनः सामान्येन प्रावरणमित्यपि प्राग् मुखवस्त्रिकाधिकारे निर्णीतमस्ति। 'खरडो तह वोरठी( वोरुद्दी ) सलोमपडओ तहा हवइ जीणं । सदसं वत्थं पल्हविमाईणमिमे उ पजाया' ॥ १ ॥ इति प्रवचन-सारोद्धारे। यद्यत्र दण्डके प्रत्याख्यानं साक्षान्नोक्तं तथापि विधिवादचरितानुवादाभ्यां श्रावकस्यापि प्रत्याख्यानाधिकारित्वात्, 'आवस्सयं करिंतो त्ति' इत्यादिना च षड्विधावश्यकस्य प्रस्तुतत्वात् प्रत्याख्यानमपि विधेयमेव । तथा चावश्यकस्य चूर्णौ संकेयं नाम केतमिति गृहस्याख्या गृहवासिनां प्रत्याख्यनमित्युक्तं भवति । तथा सावओ पोरिसिं पच्चक्खाइत्ता खित्तं गओ इत्यादि । तथा एलकाक्षोत्पत्तौ साविगा एगस्स मिच्छादिट्ठियस्स दिन्ना । वेयालियं आवस्सयं करेइ पच्चक्खाइ य । आव०चूर्णौ । तस्मादत्रानुक्तमपि प्रत्याख्यानं ज्ञेयं । प्रत्याख्यानान्ते च देसावगासियं उवभोगपरिभोगं पच्चक्खामीति व्रत-द्वयमुच्चार्यम् । देशावकाशिके च पूर्वगृहीतसर्वव्रतप्रमाणानि स्मृत्वा संक्षेप्याणि । उक्तं चावश्यकचूर्णौ देसावगासिगाधिकारे एवं सव्ववएसु जे पमाणा ठविया ते पुणो दिवसे उस्सारेइ । एवं 'एगमुहुत्तं दिवसं राइं पंचाहमेव पक्खं वा । वयमिह धारेउ दढं जावइयं उस्सहे कालं' ।१। इत्यादि । व्रतप्रमाणस्मरणे च व्रतानां शोधनार्थं श्रीउपासकदशासूत्रावश्यकादिनिर्युक्त्यादियुक्त्या सम्यक्त्वमूलद्वादशव्रतसंलेखनातीचाराः पञ्चाशीतिरालोचनीयाः, आनन्दादिभ्यः श्रीवीरेणैषामतीचाराणामेवोक्तत्वात् । तत एवं षड्विधावश्यकं कृत्वा 'पाणिवहमुसावाए अदिन्नमेहुणपरिग्गहे चेव । सयमेगं तु अणूणं उस्सासाणं भविज्जाहि' ॥ १ ॥

एव साधुमूलविहितविधिर्निरवशेषोऽप्यतिदिष्टः। ततोऽपि तस्यैव साधुचैत्ययोरभावे पौषधशालायां वा स्वगृहे वा विधीयमानस्य असइ साहुचेइआणमित्यादिना जावनियमं समाणेमि इत्येतदन्तेन पुनरपि स एव साधुमूले विहितविधिरतिदिष्टः। केवलमत्र विशेषत्रयं, तच्चेदं पूर्वं हि गृहे केवलमेव सामायिकमङ्गीकृत्य ततः साधुमूलचैत्ययोः समागत्य तत्साक्षिकं सामायिकोच्चारणपूर्वकं सामायिकादिकं सर्वमप्यावश्यकं कृतवान्। इह तु सामायिकमप्यावश्यकमपि एकत्रैव करोति, इह वाशब्दद्वयस्यापि समुच्चयार्थत्वात् १। तथा पूर्वं सामायिकं कृत्वा साधुमूले गतोऽत्र गमनं नास्ति २। तथा पूर्वं जावसाहु त्ति भणितवान् अत्र तु जावनियममिति ३। अत एवाह ग्रन्थकारः 'सामाइयं आवस्सयं वा करेइ १' नवरि तत्थ गमणं नत्थि २। भणइ जावनियमं समाणेमि ३। तथात्र वाशब्दानां समुच्चयार्थत्वमागमे स्थाने स्थाने प्रसिद्धमेव, तथाहि 'सुहुमं वा बायरं वा, तसं वा थावरं वा' इत्यादि व्रतषट्केऽपि वाशब्दाः। विकल्पार्थव्याख्या पुनर्नावबुध्यते यतोऽयमिति देशे व्याख्यायमानोऽस्ति स च पूर्वप्रदर्शितस्यैव विधिः। पूर्वं वात्र सामायिकावश्यकयोः समुदितयोरेव विधिर्भणितो न पुनरेकैकस्य पृथक् पृथगिति। ततो विकल्पार्थेन वाशब्देन को द्वितीयो विधिः प्रदर्शितः ? इति। 'पच्छा सो इड्ढिपत्तो सामाइयं काऊण पडिकंतो त्ति वंदित्तेत्यादि' अत्र कश्चिदाह पडिकंतो त्ति वंदित्तु सव्वसिद्धेत्यादि प्रतिक्रमणं कृतवानिति तदयुक्तं यतो यदेव प्रतिक्रमणं सर्वमिहैवानेनैव चूर्णिकृताऽनृद्धिप्राप्तमाश्रित्योक्तमृद्धिप्राप्तस्यापि तदेव युज्यत इति। तच्च पूर्वोक्तमिदं 'पच्छा इरियावहियाए पडिक्कमइ पच्छा आलोइत्ता वन्दइ इत्यादि, तत इहापि 'पडिकंत' इति ईर्यापथं प्रतिक्रान्तवानिति व्याख्या युक्तिमता। न च वाच्यं स्वमनीषिकया

श्राद्धसाध्वोरैर्यापथिक्यां कथं समोल्लूयामाः ? । उच्यते समितगुप्तयोर्द्वयोरप्येवंशुद्धेर्देशसर्वविरत्योः प्रपत्त्या सम्यक्त्वबलात् नारये महामीनः, असमितयोस्तु द्वयोरप्यन्यच्छेदपदैर्नवापि संयमस्थानभेदानां श्राद्धगुणानां च तारतम्येन वृद्धिहान्योरस-दृश्यत्वात्, तत आवश्यके साम्यमेव इति श्रावकयोग्यषडावश्यकविचारः।

ननु कृतसामायिकः श्राद्धो गुणैः साधुरेव। स कस्मादित्वरं सामायिकं सर्वसावद्ययोगं प्रत्याख्यामीति नोच्चरति ? सर्व-सावद्यविरतेरगारिणोऽसम्भवात् आरम्भेष्वनुमतेरव्यवच्छिन्नत्वात् कनकादिषु चात्मग्रहानिवृत्तेः साधुश्रावकयोश्च प्रपञ्चेन भेदाभिधानात् तथा चाह—

सिक्खा दुविहा गाहा उववातठिती गती कसाया य। बंधंता वेदेन्ता पडिवज्जाइक्कमे पंच ॥ १ ॥

शिक्षाकृतः साधुश्रावकयोर्महान् भेदः। शिक्षा द्विधाऽऽसेवनाशिक्षा ग्रहणशिक्षा च। शिक्षाऽभ्यासस्तत्रासेवनाशिक्षामाश्रित्य सम्पूर्णमेव चक्रवालसामाचारीं सदा साधुः पालयति। श्रावकस्तु आचाराङ्गोक्तां सामायिकेऽपि पूर्णां न पालयत्यज्ञानादसम्भ-वाच्च। ग्रहणशिक्षां त्वाश्रित्य साधुर्जघन्येन सूत्रतोऽर्थतश्चाष्टौ प्रवचनमातृरुत्कृष्टतस्तु बिन्दुसारपर्यन्तं गृह्णाति। श्रावकः सूत्रतोऽ-र्थतश्च जघन्येनाष्टप्रवचनमातृरुत्कृष्टतः षड्जीवनिकां भणति व्याख्यानयति च। अर्थतस्तु पिण्डैषणां आचाराङ्गोक्तां शृणोति तथा गाथासूत्रप्रामाण्याच्च, यत उक्तं 'सामाइयंमि उ कए०' अत्र सामायिके श्रावकः श्रमण इव स्यादित्युक्तं न तु श्रमण एवेति यथाऽभिधवराडागः। शेषं प्राग्व्याख्यातमेव। तथोपपातस्यापि भेदः श्राद्धस्योत्कृष्टोपपातोऽच्युते, साधोस्तु सर्वार्थसिद्धौ जघन्येन द्वयोरपि सौधर्मोपपातः। स्थितेरपि भवान्तरे भेदः श्राद्धस्य जघन्या स्थितिः पल्यमुत्कृष्टा द्वाविंशति सागराणि।

इति आवश्यकनिर्युक्तिवचनात् कुस्वप्नकायोत्सर्गः साधुवत् श्राद्धस्यापि युज्यते यथा ईर्यापथकायोत्सर्गः साधुश्राद्धयोस्तुल्य एवेति । तथा 'सो उस्सग्गो दुविहो चिट्ठाए अभिभवे य नायवो । भिक्खायरियाए पढमो उवसग्गभिजुंजणे बीओ' ॥ १ ॥ इत्यादि गाथा । ततः सामायिके कृते द्वितीयोऽभिभवकायोत्सर्गोऽपि युक्तः, यथा चन्द्रावतंसकराजादिभिः कृत इति । किञ्चैष आवश्यकविधिः स्वल्पोऽपि पूर्वश्रुतधराभिहितत्वात्तत्प्रमाणमेव । यदि च समधिकमपि विधिं सूत्रभाष्यचूर्णिचिरन्तनवृत्त्यादिभिः श्राद्धमाश्रित्य कोऽपि दर्शयति तदा सोऽपि प्रमाणं नात्र कोऽप्यभिनिवेशोऽस्ति यतः 'से नूणं भंते ! तमेव सच्चं नीसंकं जं जिणेहिं पवेइयं, हंता गोयमा ! तमेव सच्चं नीसंकं जं जिणेहिं पवेइयं' भगवत्यां, स्थानकेष्वपि 'आगम आयरंतेण अप्पणो हियकंखिणा । तित्थनाहो गुरू धम्मो सवे ते बहुमन्निया' ॥ १ ॥ अतः सिद्धान्तोक्तविधिः श्रद्धेयः । पञ्चमे क्षेत्रखलादौ सामायिकस्थाने कदाचित्सम्पूर्णमपि षडावश्यकं कदाचिदसम्पूर्णमपि कदाचित्केवलमपि सामायिकं भवति । तथाहि यदि चिरं स्थास्यति निर्व्यापारश्च भूमिरपि निषद्या रूयादिसंघट्टोद्योतिकादिवर्जिता मिथ्यादृष्ट्यादिसागारिकाभावश्च तदा सर्वमावश्यकं कुर्यात्, कारणे तु सामायिकरहितमप्यावश्यकं, विशेषकारणे तु केवलं सामायिकं कृत्वा नमस्कारादि परावर्त्तते । सामायिकवेलाया अभावे त्वभिग्रहविशेषरूपं ग्रन्थ्यादि यावत् सावद्यप्रत्याख्यानं कुर्यात् । यतोऽत्रैवाग्रे चूर्णौ 'अंगुट्ठमुट्ठिगंठी त्ति' व्याख्याने 'ताव न जेमेमि जाव न मुट्ठिं मुयामीत्यादि' । न केवलं भत्ते अन्नेसु वि अभिग्गहविसेसेसु । ततोऽभिग्रहविशेषाः सर्वार्थविषया भवन्ति । तथा 'वंदित्तु सवसिद्धे' इत्यादि प्रतिक्रमणनामरूढं सूत्रं निर्युक्तौ नोक्तं, तथा श्राद्धानां पाक्षिकप्रतिक्रमणसूत्रे च भिन्नेन क्षामणानि च । ततोऽयमावश्यकचूर्ण्युक्तः संक्षिप्तोऽप्यावश्यकविधिश्चिरन्तनश्राद्धानां ज्ञेयः । ननु

मर्वतः ३। अमुकं मावद्यव्यापारं न दिवा रात्रौ वा प्रमाणेन वा कुर्वे इति देशतः। अहोरात्रं व्रतं पालयामीति मर्वतः ३। अमुकं मावद्यव्यापारं न करिष्यामीति देशतः, मर्वं न कुर्वे इति मर्वतोऽव्यापारपोपधः ४। अत्र देशतः पोपधशब्दो देशावकाशिकवाची घटते नन्वतीचारप्रतिबद्धपोपधव्रतवाची, यतः चूर्णौ 'तं सत्तिओ करिज्जा तवो य जो वण्णिओ समणधम्मे। देसावगासिएण न जुत्तो मामाइएणं वा' ॥ १ ॥ तपश्च एतार्थे द्वादशधा श्रमणधर्मे यद्वर्णितं तच्छक्तितः कुर्यात् देशावकाशिकेन युक्तो देशपोपधवान तपः कुर्यात्, सामायिकेन वा युक्तः सर्वपोपधवान् तपः कुर्यात्। परं देशावकाशिकवान् श्राद्धः मदा स्यात् तेन देशपोपधोऽस्त्येव, परं स पोपधशब्दो रूढिं न लभते यथाऽविरतानां सामायिकं, उक्तं चेत्थं 'सव्वेसु कालपव्वेसु पसत्थो(त्थे) जिणमए तवो जोगो। अट्ठमिपन्नरसीसु च, नियमेण हविज्ज पोसहिओ' ॥ १ ॥ सर्वेषु कालपर्वसु शनिवादादिषु जिनमते तपो योगः प्रशस्तः, परमष्टमीपञ्चदशयोर्नियमात्पोपधिको भवेत्। अत्र सर्वपोपध एव घटतेऽन्यथा विशेषाभिधानं कथम्? तपसि देशपोपधस्यायातत्वादेव तथा यो देशपोपधं करोति स सामायिकं करोति न वा करोति। यः सर्वपोपधं करोति स नियमात्करोति। अत्र सामायिकं करोति न वा करोतीतिशब्देन पोपधसम्बद्धं सामायिकं न घटते किन्त्वावश्यककाले करोति न वा। अथ पोपधविधिः—'तं कहिं? चेइयघरे साहूमूले घरे वा पोसहसालाए वा उम्मुक्कमणि-सुवण्णो पढन्तो पुत्थयं वाएइ, धम्मज्झाणं झाएइ, जहा एए साहुगुणा अहं असमत्थो मन्दभग्गो धारिउं' इत्यादि। एवं पोपधो यो वर्णितः स सर्वपोपध एव घटते। तत एव वृत्तिकृदाह–इदमपि शिक्षापदव्रतं निरतिचारं पाल्यम्। 'पोसहो' पोपधोपवासस्य पोपमारस्थानस्य पञ्चातीचाराः। अप्रत्युपेक्षितदुष्प्रत्युपेक्षितशय्यासंस्तारो शय्या फलकाद्यास्तीर्यते शयनाय पोपधिना इति,

पोसहे, पोसहोववासस्स समणोवासएणं इमे पञ्च अइयारा जाणियव्वा, तंजहा-अप्पडिलेहियदुप्पडिलेहियसिज्जासंथारए अपमज्जियसिज्जासंथारए अप्पडिलेहियदुप्पडिलेहियउच्चारपासवणभूमीओ अप्पमज्जियदुप्पमज्जियउच्चारपासवणभूमीओ पोसहोववासस्स सम्मं अणणुपालणया ११ ॥ ( सूत्रम् )

इह पोषधशब्दो रूढ्या पर्वसु वर्त्तते । पर्वाणि चाष्टम्यादितिथयः । पूरणात्पर्व, धर्म्मोपचयहेतुत्वादित्यर्थः । अत्र पोषधशब्दो रूढ्या पर्वस्विति चिन्त्यं, ये पोषधा अविरतैर्भरतादिभिर्दिनत्रयमिहलोकार्थं कृताः ते पोषधव्रतमध्ये न घटन्ते आशंसारूपत्वेन निष्फलत्वात् । नामग्रहण एव यदि ग्राह्यस्तदा सामायिकशब्दोऽपि सम्यक्त्वसामायिके वर्त्तमानत्वात् 'बहुसो सामाइयं' इति कथं ? यावज्जीवं सामायिकं इति किं न ? पोषधशब्दश्च नियमभोजनतपोमुख्यार्थेषु सिद्धान्तशैल्या दृश्यते । परं व्रताधिकारे सर्वपोषध एव युक्त्या दृश्यतेऽतीचाराश्च तस्य । स च पर्वसु रूढो भवति । तथा पर्वाण्यष्टम्यादय इति, पञ्चम्यादयो द्वितीयाद्या वा किं नोक्ताः ? । पोषधे उपवसनं पोषधोपवासः । नियमविशेषाख्यानं चेदं । पोषधोपवासश्चतुर्विधः प्रज्ञप्तस्तद्यथा—आहारपोषध आहारनिमित्तं धर्म्मपूरणं पर्वेति भावः । एवं शरीरसत्कारविषयं धर्म्मपूरणं शरीरसत्कारपोषधः । तथा ब्रह्म कुशलानुष्ठानं चर्यं समाचरणीयं ब्रह्म च तच्चर्यं चेति समासः । एवं अव्यापारपोषधो हि सावद्यव्यापारत्यागः । तत्राहारपोषधो द्विधा देशतः सर्वतश्च । देशे विकृत्यादिसंक्षेपाचाम्लैकाशनद्विर्भक्तादिरूपः, सर्वतः अहोरात्रं चतुराहारत्यागः १ । तथा शरीरसत्कारपोषधः स्नानोद्वर्त्तनविलेपनपुष्पगन्धताम्बूलवस्त्राभरणादीनां मध्यादमुकं शरीरसत्कारं न करिष्यामीति देशतः, सर्वं स्नानादि न कुर्वे इति सर्वतः २ । एवं ब्रह्मचर्यं

दिवा रात्रौ वा प्रमाणेन वा कुर्वे इति देशतः। अहोरात्रं ब्रह्म पालयामीति सर्वतः ३। अमुकं सावद्यव्यापारं न करिष्यामीति देशतः, सर्वं न कुर्वे इति सर्वतोऽव्यापारपोषधः ४। अत्र देशतः पोषधशब्दो देशावकाशिकवाची घटते नत्वतीचारप्रतिबद्धपोषधव्रतवाची, यतः चूर्णौ 'त सत्तिओ करिज्जा तवो य जो वण्णिओ समणधम्मे। देसावगासिएण य जुत्तो सामाइएणं वा' ॥ १ ॥ तपश्च एतदर्थे द्वादशधा श्रमणधर्मे यद्वर्णितं तच्छक्तितः कुर्यात् देशावकाशिकेन युक्तो देशपोषधवान् तपः कुर्यात्, सामायिकेन वा युक्तः सर्वपोषधवान् तपः कुर्यात्। परं देशावकाशिकवान् श्राद्धः सदा स्यात् तेन देशपोषधोऽप्यस्त्येव, परं स पोषधशब्दो रूढिं न लभते यथाऽविरतानां सामायिकं, उक्तं चेत्थं 'सव्वेसु कालपव्वेसु पसत्थो(त्थे) जिणमए तवो जोगो। अट्ठमिपन्नरसीसु च, नियमेण हविज्ज पोसहिओ' ॥ १ ॥ सर्वेषु कालपर्वसु अष्टम्यादिषु जिनमते तपो योगः प्रशस्तः, परमष्टमीपञ्चदश्योर्नियमात्पोषधिको भवेत्। अत्र सर्वपोषध एव घटतेऽन्यथा नियमाभिधानं कथम्? तपसि देशपोषधस्यायातत्वादेव तथा यो देशपोषधं करोति स सामायिकं करोति न वा करोति। यः सर्वपोषधं करोति स नियमात्करोति। अत्र सामायिकं करोति न वा करोतीतिशब्देन पोषधसम्बद्धं सामायिकं न घटते किन्त्वावश्यककाले करोति न वा। अथ पोषधविधिः—'तं कहिं? चेइयघरे साहूमूले वरे वा पोसहसालाए वा उम्मुक्कमणि-सुवन्नो पढन्तो पुत्थयं वाएइ, धम्मज्झाणं झाएइ, जहा एए साहुगुणा अहं असमत्थो मन्दभग्गो धारिउं' इत्यादि। एवं पोषधो नो वर्णितः स सर्वपोषध एव घटते। तत एव वृत्तिकृदाह—इदमपि शिक्षापदव्रतं निरतिचारं पाल्यम्। 'पोसहो' पोषधोपवासस्य पोषधावस्थानस्य पञ्चातीचाराः। अप्रत्युपेक्षितदुष्प्रत्युपेक्षितशय्यासंस्तारो शय्या फलकाद्यास्तीर्यते शयनाय पोषधिना इति,

साधोर्जघन्या स्थितिः पल्यपृथक्त्वं उत्कृष्टा त्रयस्त्रिंशत्सागराणि । गतेर्भेदः साधुः सुरगतौ मोक्षेऽपि श्राद्धश्चतसृष्वेव । कषायाद्भेदः साधुः कषायोदयमाश्रित्य संज्वलनचतुस्त्रिद्व्येककषायोऽपि स्यादकषायो वा, श्रावकोऽप्यविरतो द्वादशकषायी देशविरतस्त्वष्टकषायी । बन्धाद्भेदः साधुर्मूलप्रकृत्यपेक्षयाऽष्टविधबन्धकः सप्तविधबन्धकः षड्विधबन्धक एकविधबन्धको वा श्राद्धस्त्वष्टविधबन्धको वा सप्तविधबन्धको वा । वेदनाभेदः साधुरष्टानां सप्तानां चतसृणां प्रकृतीनां वेदकः। श्राद्धस्त्वष्टानामेव । प्रतिपत्तिभेदः साधुः पञ्चमहाव्रतानि समकं प्रपद्यते, श्रावकस्तु एकमणुव्रतं द्वे इत्यादि। अथवा साधुः सकृत्सामायिकं प्रपद्य सर्वकालं धारयति श्रावकस्तु पुनः पुनः प्रपद्यते। अतिक्रमाद्भेदः साधोरेकव्रतातिक्रमे पञ्चव्रतातिक्रमः श्राद्धस्य त्वेकस्यैव । तथा 'सव्वं'ति सर्वं सावद्यं इति भणित्वा यस्य विरतिः सर्वा नास्ति अनुमतेर्नित्यप्रवृत्तत्वात् स सर्वविरतिवादी देशविरतिं सर्वविरतिं च भ्रंशयति। 'मण०' मनोदुष्प्रणिधानं मनसा गृहव्यापारादिसावद्यध्यानं १ । वाग्दुष्प्रणिधानं सावद्यासभ्यवादिताऽसमितेन च वक्तृत्वम् २ । कायदुष्प्रणिधानं अनिरीक्ष्याप्रमृज्य करांह्र्यादिन्यासः स्थानादेर्वा करणम् ३ । सामायिकस्य सम्बन्धिनी या स्मृतिरुपयोगस्तस्या अकरणम् । यथा प्रमादान्नैव सरत्यस्यां वेलायां मया सामायिकं कर्त्तव्यं कृतं न कृतमिति वा, यतः 'न सरइ पमायजुत्तो जो सामइयं कया उ कायव्वं। कयमकयं वा तस्स उ कयं पि विफलं तयं नेयं' । १ । ४ । सामायिकस्यानवस्थितस्य करणं । अनवस्थितमल्पकालं करणानन्तरमेव त्यजति, यथा 'काऊण तक्खणं चिय पारेइ करेइ वा जहिच्छाए । अणवट्ठियसामाइयं अणायाराओ असुद्धं तु ' । १ । करोति वा यदृच्छयाऽव्यवस्थितत्वेन ५ ।

दिसिव्वयगहियस्स दिसापरिमाणस्स पइदिणं परिमाणकरणं देसावगासियं, देसावगासियस्स सम-

सद्दाणुवाए रूवा-
णोवासगणं इमे पञ्च अइयारा जाणियव्वा, तंजहा-आणवणप्पओगे पेसवणप्पओगे
गुवाए बहिया पुग्गलपक्खेवे १० ॥ ( सूत्रम् )

दिग्व्रतमध्यगृहीतस्य यावज्जीवसम्बन्धिदिक्परिमाणस्यैव प्रतिदिनमित्येतत् प्रहरमुहूर्त्ताद्युपलक्षणं प्रमाणकरणं दिनादि-
गमनयोग्यदेशस्थापनं प्रतिदिनप्रमाणकरणं देशावकाशिकम् । देशो दिग्व्रतप्रमाणस्य विभाग उपलक्षणात्प्राणातिपातादिव्रता-
नामपि यावज्जीवसम्बन्धिपरिमाणनियमानां दिनादिविषये देशतः सर्वतो वा आरम्भत्यागेन संक्षेपणं देशस्तस्यावकाशो गत्यादि-
नेशावन्धो देशावकाशस्तेन निवृत्तं देशावकाशिकं, यतः ' एगमुहुत्तं दिवसं राई पंचाहमेव पक्खं वा । वयमिह धारेउ दढं
जावइयं उच्छहे कालं ' ॥ १ ॥ देशावकाशिकव्रतं दृढं धारयेत् यावन्तं कालं उत्सहेत शक्नुयात् । आनयनप्रयोगः नियमित-
भूवाशात्तुनः परेण नरेण सन्देशादिना वा आनयनाय प्रयोजनं व्यापारणम् । एवं दिननियमे सावधानतया स्थेयं । स्वयम-
गच्छता परेणापि नानेयम् । बलाद्विनियोज्यः प्रेष्यस्तस्य प्रयोगोऽन्येन नियमितभूबहिःकार्यकारणं नियमितभूवो बहिः
कार्यकारणाय शुत्कासशब्दानुपातैः परस्य ज्ञापनं शब्दानुपातः ३ । एवं स्वरूपदर्शनं परेषां रूपानुपातः ४ । नियमितभुवां
बहिः कर्करादिपुद्गलप्रक्षेपः ५ । इह देशावकाशिकं प्राणिहिंसारक्षार्थं गृह्यते, अन्यप्रेषणे च प्राणिहिंसा कारितैव । ततः कृत-
कारितयोर्न कोऽपि फलभेदः । किन्तु स्वयं गतो ईर्याशुद्धिः स्यादन्यगतौ त्वदक्षत्वादयतनैवेति भावः । तथा नियमितभुवो
बहिः शब्दादयोऽपि विषयतया नानेयाः ते आसन्ने आयान्ति तदा मन्यं अहं वा आसन्नो यामीत्यादि न चिन्त्यम् ।
पोसहोववासे चउव्विहे पन्नत्ते, तंजहा-आहारपोसहे, सरीरसक्कारपोसहे, बंभचेरपोसहे, अव्वावार-

पोसहे, पोसहोववासस्स समणोवासएणं इमे पञ्च अइयारा जाणियव्वा, तंजहा-अप्पडिलेहियदुप्पडिलेहियसिज्जासंथारए अपमज्जियसिज्जासंथारए अप्पडिलेहियदुप्पडिलेहियउचारपासवणभूमीओ अप्पमज्जियदुप्पमज्जियउचारपासवणभूमीओ पोसहोववासस्स सम्मं अणणुपालणया ११ ॥ ( सूत्रम् )

इह पोषधशब्दो रूढ्या पर्वसु वर्त्तते । पर्वाणि चाष्टम्यादितिथयः । पूरणात्पर्व, धर्म्मोपचयहेतुत्वादित्यर्थः । अत्र पोषधशब्दो रूढ्या पर्वस्विति चिन्त्यं, ये पोषधा अविरतैर्भरतादिभिर्दिनत्रयमिहलोकार्थं कृताः ते पोषधव्रतमध्ये न घटन्ते आशंसारूपत्वेन निष्फलत्वात् । नामग्रहण एव यदि ग्राह्यस्तदा सामायिकशब्दोऽपि सम्यक्त्वसामायिके वर्त्तमानत्वात् 'बहुसो सामाइयं' इति कथं ? यावज्जीवं सामायिकं इति किं न ? पोषधशब्दश्च नियमभोजनतपोमुख्यार्थेषु सिद्धान्तशैल्या दृश्यते । परं व्रताधिकारे सर्वपोषध एव युक्त्या दृश्यतेऽतीचाराश्च तस्य । स च पर्वसु रूढो भवति । तथा पर्वाण्यष्टम्यादय इति, पञ्चम्यादयो द्वितीयाद्या वा किं नोक्ताः ? । पोषधे उपवसनं पोषधोपवासः । नियमविशेषाख्यानं चेदं । पोषधोपवासश्चतुर्विधः प्रज्ञप्तस्तद्यथा-आहारपोषध आहारनिमित्तं धर्म्मपूरणं पर्वेति भावः । एवं शरीरसत्कारविषयं धर्म्मपूरणं शरीरसत्कारपोषधः । तथा ब्रह्म कुशलानुष्ठानं चर्यं समाचरणीयं ब्रह्म च तच्चर्यं चेति समासः । एवं अव्यापारपोषधो हि सावद्यव्यापारत्यागः । तत्राहारपोषधो द्विधा देशतः सर्वतश्च । देशे विकृत्यादिसंक्षेपाचाम्लैकाशनद्विर्भक्तादिरूपः, सर्वतः अहोरात्रं चतुराहारत्यागः १ । तथा शरीरसत्कारपोषधः स्नानोद्वर्त्तनविलेपनपुष्पगन्धताम्बूलवस्त्राभरणादीनां मध्यादमुकं शरीरसत्कारं न करिष्यामीति देशतः, सर्वं स्नानादि न कुर्वे इति सर्वतः २ । एवं ब्रह्मचर्यं

दिवा रात्रौ वा प्रमाणेन वा कुर्वे इति देशतः। अहोरात्रं ब्रह्म पालयामीति सर्वतः ३। अमुकं सावद्यव्यापारं न करिष्यामीति देशतः, सर्वं न कुर्वे इति सर्वतोऽव्यापारपोषधः ४। अत्र देशतः पोषधशब्दो देशावकाशिकवाची घटते नत्वेकाशनादिप्रतिबद्धपोषधव्रतवाची, यतः चूर्णौ 'तं सत्तिओ करिज्जा तवो य जो वण्णिओ समणधम्मे। देसावगासिएण य जुत्तो सामाइएणं वा' ॥ १ ॥ तपश्च एतदर्थे द्वादशधा श्रमणधर्मे यद्वर्णितं तच्छक्तितः कुर्यात् देशावकाशिकेन युक्तो देशपोषधवान् तपः कुर्यात्, सामायिकेन वा युक्तः सर्वपोषधवान् तपः कुर्यात्। परं देशावकाशिकवान् श्राद्धः सदा स्यात् तेन देशपोषधोऽस्त्येव, परं स पोषधशब्दो रूढिं न लभते यथाऽविरतानां सामायिकं, उक्तं चेत्थं 'सव्वेसु कालपव्वेसु पसत्थो(त्थे) जिणमए तवो जोगो। अट्ठमिपन्नरसीसु च, नियमेण हविज्ज पोसहिओ' ॥ १ ॥ सर्वेषु कालपर्वसु अष्टम्यादिषु जिनमते तपो योगः प्रशस्तः, परमष्टमीपञ्चदश्योर्नियमात्पोषधिको भवेत्। अत्र सर्वपोषध एव घटतेऽन्यथा विशेषाभिधानं कथम्? तपसि देशपोषधस्यायातत्वादेव तथा यो देशपोषधं करोति स सामायिकं करोति न वा करोति। यः सर्वपोषधं करोति स नियमात्करोति। अत्र सामायिकं करोति न वा करोतीतिशब्देन पोषधसम्बद्धं सामायिकं न घटते किन्त्वावश्यककाले करोति न वा। अथ पोषधविधिः—'तं कहिं? चेइयघरे साहुमूले घरे वा पोसहसालाए वा उम्मुक्कमणिसुवण्णो पढन्तो पुत्थयं वाएइ, धम्मज्झाणं झाएइ, जहा एए साहुगुणा अहं असमत्थो मन्दभग्गो धारिउं' इत्यादि। एवं पोषधो यो वर्णितः स सर्वपोषध एव घटते। तत एव वृत्तिकृदाह—इदमपि शिक्षापदव्रतं निरतिचारं पाल्यम्। 'पोसहो' पोषधोपवासस्य पोषधाख्यस्थानस्य पञ्चातीचाराः। अप्रत्युपेक्षितदुष्प्रत्युपेक्षितशय्यासंस्तारो शय्या फलकाद्यास्तीर्यते शयनाय पोषधिना इति,

संस्तारः दर्भकम्बलीवस्त्रादिः, प्रत्युपेक्षणं चक्षुषा निरीक्षणं, प्रमार्जनमासेवनकाले वस्त्रोपान्तादिना, न प्रत्युपेक्षितौ दुष्टप्रमत्ततया प्रत्युपेक्षितौ वा १, न प्रमार्जितौ दुष्टप्रमार्जितौ वा शय्यासंस्तारौ २, न प्रत्युपेक्षिता दुष्टप्रत्युपेक्षिता वा, न प्रमार्जिता दुष्टप्रमार्जिता वा उच्चारप्रश्रवणभूमयः, उच्चारो विट् प्रश्रवणं मूत्रं तयोर्भूमयः, उच्चारादिशब्दोपलक्षणान्निष्ठ्यूतस्वेदमलादित्यागभूमिः, अप्रत्युपेक्षितदुष्प्रत्युपेक्षितोच्चारप्रश्रवणभूमयः [अप्रमार्जितदुष्प्रमार्जितोच्चारप्रश्रवणभूमयः ३–४] । एत्थ पुण सामायारी कडपोसहो नो अपडिलेहियसेज्जं दुरूहइ आरोहति, संथारगं वा दुरूहइ, पोसहसालं वा सेवइ, दब्भवत्थे वा भूमीए संथरेइ, काइयभूमीओ आगओ पुणरवि पडिलेहइ, अन्नहाइयारो, एवं पीठगाइसु । तथा पोषधोपवासस्य सम्यक् प्रवचनोक्तविधिना निष्प्रकम्पेन चेतसाऽननुपालनं अनासेवनम् ५ । इत्थं भावना–'कयपोसहो अथिरचित्तो आहारे तात्र सव्वं देसं वा पत्थेइ । बिइयदिवसे पारणगस्स अप्पणो अट्ठाए आढत्ति करेइ कारावेइ वा, इमं इमं वत्ति करेह । तथा सरीरसकारे सरीरं उव्वट्टेइ । दाढियाओ केसा वा रोमाई वा सिंगाराभिप्पाएणं ठावेइ, दाहे वा सरीरं सिंचइ । एवं सव्वाणि सरीरभूसाकारणाणि[ण] परिहरइ । बंभचेरे इहलोइए परलोइए वा भोगे पत्थेइ संवाहेइ वा । अहवा सद्दरूवरसफरिसगन्धे वा अभिलसइ कइया बंभचेरपोसहो पुरिहि इति । अव्वावारे सावज्जाणि वावारेइ कयमकयं वा चिन्तेइ । एवं पंचाइयारसुद्धो अणुपालियव्वो त्ति । इह युक्त्या सर्वपोषध एवेयं युक्तिर्युक्ता न देशे, पोषधनामापि सर्वस्यैवोच्यते न तु देशस्य यतो वृत्तिकृता 'कयपोसहो अथिरचित्तो' इत्याद्युक्तं नतूक्तं 'कयसव्वपोसहो अथिरचित्तो' इति । तस्मात्पोषधः सर्वपोषध एव । ततो यत्केऽपि सूरयो निशीथभाष्यगाथार्थात्पोषधे आहारं ग्राहयन्ति तन्न ज्ञायते, यतः तत्रेयं गाथा 'जे भिक्खू असणाई दिज्जा गिहि अहव अन्नतित्थीणं । सो आणाअणवत्थं

कडसामाइउ होइ समण इव । तस्समजुत्तमदाणं चोदग सुण कारणं तत्थ
मिच्छत्तविराहणं पावे ॥ १ ॥ जुत्तमदाणमसीले
॥ २ ॥ कामी मघरंगणओ थूलपइण्णा से होइ दट्ठवा । छेदणभेदणकरणे उद्दिट्ठकडं पि सो भुंजे ॥ ३ ॥ पंच विसया कामेइ
त्ति कामी, सह गृहेण सगृहः, अङ्गना स्त्री सह अङ्गनया साङ्गनः । थूलपइण्णा देसविरत इति । वृक्षादिछेदने पृथिव्यादिभेदने
न प्रवृत्तः सामायिकभावादन्यत्र जं च उद्दिट्ठकडं तं कडसामाइओ वि भुंजइ । एवं सो सव्वविरओ न भवति । एएण कारणेण
तस्स न कप्पइ दाउं' । नि० भा० चू० उ० १५ । अत्र यत्सामायिके उद्दिष्टकृतभोग उक्तः स वस्त्रपट्टकाद्युद्दिश्येति वृद्धाः ।
अथाशनादीनिशब्दस्पष्टत्वेऽशनादिभोग एव घटते, उच्यते यद्यशनादिभोगस्तदा कथञ्चित्सामायिके स भविष्यति परं पोषध-
व्रते कथं घटते ? आहारादिनिषेधादेव । सामायिके चाहारग्रहणं गच्छाचरणया प्रायो न दृश्यतेऽतोऽत्र बहुश्रुताः प्रमाणम् ।
पर भुञ्जेशब्देन भोजनार्थः सामायिके कया रीत्या सङ्गतस्तच्चिन्त्यं, कायचिन्तादौ उद्दिष्टकृत इव भोगो घटतेऽपि ॥ ११ ॥

अतिहिसंविभागो नाम नायागयाणं कप्पणिज्जाणं अन्नपाणाईणं दव्वाणं देसकालसद्धासक्कारकमजुअं
पराए भत्तीए आयाणुग्गहबुद्धीए संजयाणं दाणं, अतिहिसंविभागस्स समणोवासएणं इमे पंच अइयारा
जाणियव्वा नंजहा—सच्चित्तनिक्खेवणया सच्चित्तपिहणया कालइक्कमे परववएसे मच्छरिया य १२ ॥ (सूत्रं)

भोजनार्थं भोजनकालागतोऽतिथिरुच्यते । तत्रात्मार्थं निष्पादिताहारस्य गृहिव्रतिनः साधुरेव मुख्योऽतिथिस्तस्य संवि-
भागो दानं अतिथिसंविभागः। संविभागशब्दात्पश्चात्कर्म्मादिदोषपरिहारो ज्ञेयः। नामशब्दोऽलङ्कारार्थः। न्यायागतानां न्यायो
द्विजक्षत्रियवैश्यादीनां स्ववृत्त्यनुष्ठानं तेनागतानां प्राप्तानां अस्तैन्येन व्यवहारशुद्ध्यागतानामित्यर्थः। कल्पनीयानामुद्गमादि-

दोषोज्झितानामित्यर्थः। अन्नपानादीनामादितो वस्त्रपात्रौषधभेषजादिग्रहः अनेन हिरण्यादिव्यवच्छेदः। देशकालश्रद्धासत्कारक्रमयुक्तम्। तत्र शाल्यादिनिष्पत्तिभाग् देशः, सुभिक्षादिः कालः, शुद्धचित्तपरिणामः श्रद्धा। अभ्युत्थानासनदानवन्दनानुव्रजनादिः सत्कारः, पाकस्य पेयादिपरिपाट्या प्रदानं क्रमः। यद्वोत्कृष्टानुत्कृष्टवस्तूनां परिपाटिः क्रमः। एभिर्देशादिभिर्युक्तम्। अनेन विपरीतक्रमव्यवच्छेदमाह। परया भक्त्या परया तत्त्वबुद्ध्या, तथात्मानुग्रहबुद्ध्या न तु यत्यनुग्रहबुद्ध्या यतयश्चात्मन्यनुग्रहपराः स्युः। संयतेभ्यो मूलोत्तरगुणसंपन्नेभ्यो दानम्। एत्थ सामायारी–सावएण पोसहं पारंतेण नियमा साहूण दाउं पारेयव्वं। अन्नया पुण अनियमो, दाउं वा पारेइ पारिए वा देइ, तम्हा पुव्वं साहूणं दायव्वं। कहं? जाहे देसकालो यदा प्रस्तावः ताहे अप्पणा सरीरस्स विभूसं काउं। परं विभूषा किमर्थमुक्ता? उच्यते, अलङ्कृतो धर्म्ममाचरेदिति व्यवहाररक्षायै, साहुपडिस्सयं गंतुं निमंतेइ भिक्खं गेण्हह त्ति। साधूणं का पडिवत्ती? साधूनां का प्रतिपत्तिर्युक्तिः? ताहे अन्नो पडलं अन्नो मुहणंतगं अन्नो भाणं पडिलेहेइ मा अंतराइयदोसो ठवियगदोसो य, अन्तरायदोषः स्थापनादोषश्च मा भवत इति साधवः पात्रकप्रतिलेखनां विभिन्नाः कुर्युः। सो जइ पढमाए पोरिसीए निमंतेइ अत्थि [1]नमोक्कारइतगा तो घेप्पइ, अह नत्थि न घेप्पइ, तं वहियव्वयं होइ। जइ घणं लग्गिज्जा ताहे घेप्पइ संचे(चि)क्खावे(वि)ज्जइ। जो वा उग्घाडपोरिसीए पारेइ पारणइत्तो अन्नो तस्स दिज्जइ। पच्छा तेण सावगेण समगं गम्मइ। संघाडगो वच्चइ एगो न वट्टइ पेसेउं साहुणो पुरओ सावगो मग्गओ घरं नेऊण आसणेण उवनिमंतिज्जन्ति। जइ निविट्ठा तो लट्ठयं। अहवा न निविस्सन्ति तहावि विणओ पउत्तो, ताहे भत्तं पाणं सयं चेव देइ। अहवा

१ 'णमोक्कारसहिताइतो' इति आव० हारि० वृत्तौ, 'नमोकारसित्ता' इति आव० चूर्णौ।

माणं धरेइ भत्ता देइ। अहवा ठियओ अच्छइ जाव दिठ्ठं, साहू वि सावसेसं दव्वं गेण्हन्ति पच्छाकम्मपरिहरणट्ठा, दाऊण वंदिउं विसज्जेइ अणुगच्छइ। पच्छा सयं भुंजइ। जं च किर साहूणो न दिन्नं तं सावगेण न भोत्तव्वं। जइ पुण साहू नत्थि ताहे देसकालवेलाए दिसालोओ कायव्वो। विसुद्धभावेणं चिंतेयव्वं। जइ साहवो होंता नित्थारिओ मि होंतो त्ति इत्यादि। अन्यार्थीनाराः। अथादित्सादानबुद्ध्या सचित्तेषु निक्षेपणं मायया १। तथा एवं सचित्तेन पिधानं स्थगनं सचित्तपिधानं २। एवं कालातिक्रमः। उचितो यो यतिभिक्षाकालस्तमतिक्रम्यानागतं वा निमन्त्र्य भुङ्क्ते ३। एवं साधोः पोषधोपवासपारण-काले भिक्षागमनस्य प्रकटमन्नादि पश्यतः श्राद्धो वक्ति परकीयमिदमन्नं नास्माकीयं तेन न ददे इति परस्य व्यपदेशः छलं परव्यपदेशः परं व्यपदिशति यद्वा अन्यस्य जीवतो मृतस्य वा पुण्यं भवत्विति ४। एवं मात्सर्यं इति याचितः कुप्यति सदपि न दत्ते तथा अन्योन्नति वैमनस्यं मात्सर्यं स्यात्तेन यदि द्रमकेण याचितेन दत्तं किमहं ततोऽपि न्यूनः ? इति मात्सर्याद्दत्ते। सकषायचित्तस्य वा दाने मात्सर्यम् ५। समाप्तं चतुर्थं शिक्षापदव्रतम् ॥ १२ ॥ श्राद्धधर्मं निगमयन्नाह

इत्थं पुण समणोवासगधम्मे पंचाणुव्वयाइं तिन्नि गुणव्वयाइं आवकहियाइं, चत्तारि सिक्खावयाइं इत्तरियाइं, एयस्स पुणो समणोवासगधम्मस्स मूलवत्थुं सम्मत्तं, तंजहा–तं निसग्गेण वा अभिगमेण वा पंचअइयारविसुद्धं अणुव्वयगुणव्वयाइं च अभिग्गहा अन्ने वि पडिमादओ विसेसकरणजोगा, अप-च्छिमा मारणंतिया संलेहणाझूसणाराहणया, इमीए समणोवासएणं इमे पञ्च अइयारा जाणियव्वा–इहलोगासंसप्पओगे परलोगासंसप्पओगे जीवियासंसप्पओगे मरणासंसप्पओगे कामभोगासंसप्प-

सागारमणागारं परिमाणकडं निरवसेसं ॥ १५५८ ॥

अनागतं पर्युषणादौ गुरुवैयावृत्त्यादेस्तपोऽन्तरायभावादर्वाक् तत्तपःकरणं अनागतम् १ । एवमतिक्रान्ते पर्वणि तपोऽतिक्रान्तम् २ । कोट्यौ अन्तौ मिलितौ समानौ यत्र तत्कोटीसहितं आद्यन्तयोश्चतुर्थादितुल्यप्रत्याख्यानमित्यर्थः ३ । नितरां यन्त्रितं नियन्त्रितं यथा अमुकदिने कारणेऽकारणे वा एतत्तपः कार्यमेव ४ । सहाकारैः साकारम् ५ । अविद्यमानाकारं अनाकारम् ६ । दत्त्यादिपरिमाणात् परिमाणकृतम् ७ । सर्वाहारत्यागरूपं निरवशेषम् ८ ॥ १५५८ ॥

संकेयं चेव अद्धाए पच्चक्खाणं तु दसविहं ।

सयमेवणुपालणियं दाणुवएसे जह समाही ॥ १५५९ ॥

केतं चिह्नं अङ्गुष्ठादि सह केतेन वर्तते इति सङ्केतम् ९ । 'अद्धाए'त्ति पौरुष्यादिकालमानम् १० । प्रत्याख्यानं दशविधं इदं स्वयमेवानुपालनीयं न तु प्राणातिपातादिप्रत्याख्यानवदन्यकारापणेऽनुमतौ वा निषेधः । दाने कृतोपवासस्यान्येषामाहारदाने उपदेशे अन्यदानोपदेशे च यथासमाधि स्वेच्छया करोतीत्यर्थः ॥ १५५९ ॥ दशविधप्रत्याख्यानं व्याख्याति

होही पज्जोसवणा मम य तया अन्तराइयं हुज्जा ।

गुरुवेयावच्चेणं तवस्सिगेलन्नयाए वा ॥ १५६० ॥

भविष्यति पर्युषणा उपलक्षणाच्चतुर्मासिकादावपीदं ज्ञेयम् । तत्र पर्युषणायां विकृष्टतपः कार्यम्, तत्र यदि सर्वविकृष्टं कर्तुं न शक्नोति तदापि जघन्यविकृष्टं अष्टमं करोति, एवं चतुर्मासे षष्ठं पाक्षिके उपवासः । तथाऽन्येष्वपि स्नात्ररथयात्रादिष्वपि यथाशक्त्या तपः कार्यम् । तदा पर्वे मम गुरुवैयावृत्त्येन तपस्विपारणेन स्वस्य ग्लानतया च अन्येन वा ग्रामगमनकार्यादिना श्वोपवासस्यान्तरायं भवति ॥ १५६० ॥

सो दाइ तवोकम्मं पडिवज्जे तं अणागए काले ।

एयं पच्चक्खाणं अणागयं होइ नायव्वं ॥ १५६१ ॥

स इदानीं अनागते काले तत्पर्युषणासम्बन्धि तपःकर्म्म प्रतिपद्यते तदनागते काले एतत्प्रत्याख्यानमनागतं ज्ञातव्यम् ॥ १५६१ ॥ अतिक्रान्तव्याख्यामाह

पज्जोसवणाइ तवं जो खलु न करेइ कारणज्जाए ।

गुरुवेयावच्चेणं तवस्सिगेलन्नयाए वा ॥ १५६२ ॥

पर्युषणायां यस्तपो न करोति कारणजाते सति तदेवाह गुर्वादिवैयावृत्त्येन तपस्विग्लानतयाऽन्तरायं च ॥ १५६२ ॥

सो दाइ तवोकम्मं पडिवज्जइ तं अइच्छिए काले ।

ओगे १३ ॥ (सूत्रम्)

पंचाणुव्रतानि त्रीणि गुणव्रतानि यावत्कथिकानि सकृद् गृहीत्वा यावज्जीवं पाल्यानि। शिक्षापदव्रतानीत्वराणि, शिक्षाऽभ्यासस्तस्याः पदानि स्थानानि तान्येव व्रतानि। तत्र प्रतिदिवसानुष्ठेये सामायिकदेशावकाशिके पुनः पुनरुच्चार्ये। अत्र सामायिकमपि देशावकाशिकवत्कालद्वयमेव कार्यं इति वृद्धाः। पोषधोपवासातिथिसंविभागौ तु प्रतिनियतदिवसानुष्ठेयौ न प्रतिदिवसाचरणीयौ। अत्र प्रतिनियतशब्देन पर्वदिने इति वृद्धाम्नायः। यत्त्वाहुनाऽष्टमेन पोषधादि कृतं तत्र द्वादशं पौषधव्रतं किं न घटते ? तस्य पर्वदिनानुष्ठानत्वात् श्रीविजयादिनां पोषधदृष्टान्तेन यद्वा त्रयोदश्यामुपवासं कृत्वाऽन्ते चतुर्दशीपञ्चदश्योः पोषधद्वयमिति, यद्वा नियमविशेषे वाऽष्टमतपसि पोषधशब्दः। अत्र यद्वचनविरुद्धं स्यात्तच्छ्रुतज्ञानं क्षमयामि। 'एयस्स०' एतस्य द्वादशविधस्य धर्मस्य मूलवस्तु मूलभूतं सम्यक्त्वं प्रशमसंवेगनिर्वेदानुकम्पास्तिकयस्वरूपम्। तन्निसर्गेण वाऽधिगमेन वा स्यात्तत्र निसर्गः स्वभावोऽधिगमो गुरोः शास्त्राद्वा यथार्थवस्तुज्ञानम्। यद्यपि मुख्यतः सम्यक्त्वं क्षयोपशमाज्जायते तथापि निसर्गाधिगमौ सहकारिणौ भवत एव। इदं च शङ्कादिपञ्चातीचाररहितं पाल्यमिति शेषः। तथाणुव्रतानि गुणव्रतानि निरतिचाराणि पाल्यानि। अभिग्रहा लोचकृतघृतदानाद्याः श्र(शु)द्धा भङ्गाद्यतिचाररहिताः पाल्याः, अन्ये च प्रतिमाद्या विशेषेण करणयोगाः पुण्यव्यापारा आदिशब्दादनित्यत्वाद्या भावनाः पाल्याः। तथाऽपश्चिममारणान्तिकी संलेखनाजोषणाराधनाऽतिचाररहिता सम्यक् पाल्या। तत्र पश्चिमैवापश्चिमा मरणमेवान्तो मरणान्तस्तत्र भवा मारणान्तिकी। संलिख्यन्ते कृशीक्रियन्तेऽनया देहकषायादीनि [ इति ] संलेखना तपोविशेषरूपा तस्या जोषणं सेवनं तस्याराधनाऽखण्डपालनं चः समुच्चये। एत्थ

सामायारी–आसेवियगिहिधम्मेण किल सावगेण पच्छा निक्खमियव्वं। एवं सावगधम्मो उज्झिओ होइ। न सक्कइ ताहे भत्तप-
चक्खाणकाले संथारसमणेण होयव्वं। अत्रेदं विचार्यते। यदि संस्तारदीक्षाप्यवश्यं श्राद्धैर्ग्राह्या इत्यस्ति आनन्दादिभिश्च सामग्र्यां
नात्ता, ततः केवलचरितानुवादमात्रेणैव न स्थेयं किन्तूक्तबलादपि विधेयम्। तेन ग्रन्थिं बद्ध्वा सामायिकवद्यत्पालयन्ति
मारग्घनियमं तत्र दोषो न घटते। 'इमीए' इत्यादि, इह मरणकाले इहलोकाशंसाप्रयोगः इहलोको मनुष्यलोकस्तस्मिन्नाशंसा-
ऽभिलाषस्तस्याः प्रयोगो यथा इह भवे महत्त्ववान् स्यामिति १। एवं परलोको देवलोकः २। जीविताशंसा मरणसमयेऽपि
पुस्तकाचनादिपूजाबहुपरिवारलोकश्लाघ्यत्वदर्शनादनशनिनोऽपि जीवितेच्छाकरणम् ३। मरणाशंसाप्रयोगोऽनशने न पूज्यत्वे
अनिष्टस्पर्शादिना शीघ्रं म्रियेऽहमिति चिन्तनम् ४। कामभोगाशंसा जन्मान्तरे चक्री स्यामित्यादि ५। व्याख्यातं दिग्व्र-
तादिदेशोत्तरगुणप्रत्याख्यानम्। सर्वोत्तरगुणप्रत्याख्यानमाह

पच्चक्खाणं उत्तरगुणेसु खमणाइयं अणेगविहं।
तेण य इहयं पगयं तं पि य इणमो दसविहं तु ॥ १५५७ ॥

प्रत्याख्यानं उत्तरगुणेषु उत्तरगुणविषयं प्रकरणात्साधूनामिदं क्षपणादि उपवासादि, तेनैवात्र सर्वोत्तरगुणप्रत्याख्यान-
प्रकारे प्रकृतमुपयोगः, तदपि चेदं दशविधं मूलभेदापेक्षया ॥ १५५७ ॥

अणागयमइक्कंतं कोडियसहिअं निअंटिअं चेवं।

सागारमणागारं परिमाणकडं निरवसेसं ॥ १५५८ ॥

अनागतं पर्युषणादौ गुरुवैयावृत्त्यादेस्तपोऽन्तरायभावादर्वाक् तत्तपःकरणं अनागतम् १ । एवमतिक्रान्ते पर्वणि तपोऽतिक्रान्तम् २ । कोट्यौ अन्तौ मिलितौ समानौ यत्र तत्कोटीसहितं आद्यन्तयोश्चतुर्थादितुल्यप्रत्याख्यानमित्यर्थः ३ । नितरां यन्त्रितं नियन्त्रितं यथा अमुकदिने कारणेऽकारणे वा एतत्तपः कार्यमेव ४ । सहाकारैः साकारम् ५ । अविद्यमानाकारं अनाकारम् ६ । दत्त्यादिपरिमाणात् परिमाणकृतम् ७ । सर्वाहारत्यागरूपं निरवशेषम् ८ ॥ १५५८ ॥

संकेयं चेव अद्धाए पच्चक्खाणं तु दसविहं ।
सयमेवणुपालणियं दाणुवएसे जह समाही ॥ १५५९ ॥

केतं चिह्नं अङ्गुष्ठादि सह केतेन वर्तते इति सङ्केतम् ९ । 'अद्धाए'त्ति पौरुष्यादिकालमानम् १० । प्रत्याख्यानं दशविधं इदं स्वयमेवानुपालनीयं न तु प्राणातिपातादिप्रत्याख्यानवदन्यकारापणेऽनुमतौ वा निषेधः । दाने कृतोपवासस्यान्येषामाहारदाने उपदेशे अन्यदानोपदेशे च यथासमाधि स्वेच्छया करोतीत्यर्थः ॥ १५५९ ॥ दशविधप्रत्याख्यानं व्याख्याति

होही पज्जोसवणा मम य तया अन्तराइयं हुज्जा ।
गुरुवेयावच्चेणं तवस्सिगेलन्नयाए वा ॥ १५६० ॥

भविष्यति पर्युषणा उपलक्षणाच्चतुर्मासकादावपीदं ज्ञेयम् । तत्र पर्युषणायां विकृष्टतपः कार्यम्, तत्र यदि सर्वविकृष्टं कर्तुं न शक्नोति तदापि जघन्यविकृष्टं अष्टमं करोति, एवं चतुर्मासे षष्ठं पाक्षिके उपवासः । तथाऽन्येष्वपि स्नात्ररथयात्रादिष्वपि यथाशक्त्या तपः कार्यम् । तदा पर्वे मम गुरुवैयावृत्त्येन तपस्विपारणेन स्वस्य ग्लानतया च अन्येन वा ग्रामगमनकार्यादिना नोपरामस्यान्तरायं भवति ॥ १५६० ॥

सो दाइ तवोकम्मं पडिवज्जे तं अणागए काले ।
एयं पच्चक्खाणं अणागयं होइ नायव्वं ॥ १५६१ ॥

स इदानीं अनागते काले तत्पर्युषणासम्बन्धि तपःकर्म्म प्रतिपद्यते तदनागते काले एतत्प्रत्याख्यानमनागतं ज्ञातव्यम् ॥ १५६१ ॥ अतिक्रान्तव्याख्यामाह

पज्जोसवणाइ तवं जो खलु न करेइ कारणज्जाए ।
गुरुवेयावच्चेणं तवस्सिगेलन्नयाए वा ॥ १५६२ ॥

पर्युषणायां यस्तपो न करोति कारणजाते सति तदेवाह गुर्वादिवैयावृत्त्येन तपस्विग्लानतयाऽन्तरायं च ॥ १५६२ ॥

सो दाइ तवोकम्मं पडिवज्जइ तं अइच्छिए काले ।

एयं पच्चक्खाणं अइकंतं होइ नायव्वं ॥ १५६३ ॥

'अइच्छिए' अतिक्रान्ते काले ॥ १५६३ ॥ तत्रानागतप्रत्याख्याने विधिः—पर्युषणायां गुरूणां गोचरवैयावृत्त्यं कार्यं तदा तेऽसहत्वादुपवासासहा अन्या वा काप्याज्ञप्तिः स्यात्, ग्रामान्तराद्वा किञ्चिदानेयं स्यात्, देहवैयावृत्तिर्वा । उपवासी तु गुरुवैयावृत्त्याद्यसहः । ततः क्षमः उपवासवैयावृत्त्ये कुर्यादन्यो वोपवासासहः कुर्यात्, यद्वान्यो विहर्ता नास्ति अस्ति वा परमलाभोऽज्ञो वा विधौ, ततः स एव पूर्वमुपवासं कृत्वा पर्युषणायां भुङ्क्ते, यद्वा तपस्वी क्षपकस्तस्य पर्युषणायां पारणं समेतं गोचराक्षमश्च । असहं तपस्विनं ज्ञात्वा पर्युषणायां पारापितः ततस्तपस्वी चेत् क्षमो मनागपि तदा आसन्नगृहेषु हिण्डते आसन्ने वा न गृहाणि योग्यं वा न लभ्यते ततः स एवेत्यादि प्राग्वत् । तथा ग्लानतां स्वस्य वेत्ति यथा तद्दिनेऽहं असहः स्यां, वैद्याद्वा वेत्ति, वैद्येनोक्तं अमुकदिनेऽगदं कुर्याः, यद्वा गण्डादिपीडाऽसहत्वं स्वस्य तदा वेत्ति, ततः प्राग्वत् । तथा कुलगणसंघाचार्यगच्छहेतून् वा पर्युषणायां वेत्ति । तेनानागतं प्रत्याख्याति । तदा च भुङ्क्ते, पर्युषणातपो निर्जरैव तस्य एवमनागतप्रत्याख्यानमप्येभिः कारणैर्ज्ञेयम् । कोटीसहितमाह—

पट्ठवणओ अ दिवसो पच्चक्खाणस्स निट्ठवणओ अ ।
जहियं समिंति दुन्नि वि तं भन्नइ कोडिसहियं तु ॥ १५६४ ॥

प्रस्थापकश्च तपःप्रारम्भकश्च दिवसः प्रत्याख्यानस्य निष्ठापकश्च समाप्तिदिवसश्च यत्र प्रत्याख्याने समेतः तुल्यप्रत्या-

ख्यानत्वेन मिलतः द्वावपि पर्यन्तौ तद्भण्यते कोटीसहितम् । यथा प्रातरावश्यकेऽभक्तार्थः कृतः ततो द्वितीयेऽह्न्यपि तं कुर्यादिदं द्वितीयोपवासस्य प्रस्थापनाऽऽद्यस्य तु निष्ठापनेति द्वौ कोणौ मिलितौ, एवं आयम्बिलनिव्वियएगासणएगट्ठाणाण वि । अष्टमादिषु उभयतः कोटिः यतो द्वितीयप्रत्याख्यानाहोरात्रान्त एवोपवासो मिलितः । आद्योपवासाहोरात्रान्त एव च द्वितीयं प्रत्याख्यानं मिलितमिति । यद्वोपवासान्ते आचामाम्लं पुनरुपवासाचामाम्ले इति, एवं एकासनादिष्वपि संयोगः । निर्वि-कल्पादिष्वपि प्रत्याख्यानेष्वपि सदृशेषु विसदृशेषु च संयोगः कार्यः ॥ १५६४ ॥ नियन्त्रितमाह—

मासे मासे अ तवो अमुगो अमुगे दिणंमि एवइओ । हट्ठेण गिलाणेण व कायव्वो जाव ऊसासो ॥ १५६५

मासे मासेऽमुकममुकं चतुर्थादितपः, एतावन्मात्रं संख्यया, अमुकदिवसे हृष्टेन नीरोगेण ग्लानेन वा कार्यम् यावदुच्छ्वासो यावदायुः ॥ १५६५ ॥

एयं पच्चक्खाणं नियंटियं धीरपुरिसपन्नत्तं ।
जं गिण्हंतऽणगारा अणिस्सि(म्भ)अप्पा अपडिबद्धा ॥ १५६६ ॥

नियन्त्रितं यद् गृह्णन्ति अनगारा अनिश्रितात्मानोऽनिदाना बुद्धा अप्रतिबद्धा देहक्षेत्रादिषु ॥ १५६६ ॥

चउदसपुव्वीजिणकप्पिएसु पढमंमि चेव संघयणे । एयं विच्छिन्नं खलु थेरा वि तया करेंसी य ॥ १५६७

चतुर्दशपूर्विजिनकल्पिकेषु प्रथमे एव वज्रऋषभनाराचसंहनने एतद् व्युच्छिन्नम् । स्थविरा अपिशब्दादन्येऽपि तदाऽकार्षुः ॥ १५६७ ॥ साकारमाह—

**मयहरगागारेहिं अन्नत्थ वि कारणंमि जायंमि । जो भत्तपरिच्चायं करेइ सागारकडमेयं ॥ १५६८ ॥**

अयं महानयं महानन‌योरतिशयेन महान् महत्तरा आकाराः प्रकारास्तैर्महत्तराकारैः प्रभूतदशाकारख्यापनार्थं बहुवचनम् । अतो महत्तराकारैर्हेतुभूतैरन्यस्मिंश्चानाभोगादौ कारणे जाते सति भुजिक्रियां करिष्ये अहमित्येवं यो भक्तपरित्यागं करोति, साकारकृतमेतत् । यथा साधुनाऽभक्तार्थः प्रत्याख्यातः । गुरुभिरूचेऽमुके ग्रामे गम्यं स ऊचे ममोपवासः । ततश्चेत्क्षमस्तदा याति अशक्तौ अन्यो याति । नास्त्यन्यस्तत्कार्याक्षमो वास्ति ततो गुरुस्तं प्रेषयति तस्य भुञ्जानस्यानभिलाषस्योपवासनिर्जरा स्यात् गुरुनियोगेन, एवं पारिष्ठापनिकाकारोऽपि युक्त्या ज्ञेयः । एवं ग्लानकुलसंघकार्येष्वपि ॥१५६८॥ अनाकारमाह—

**निज्जायकारणंमी मयहरगा नो करंति आगारं ।**
**कंतारवित्तिदुब्भिक्खयाइ एयं निरागारं ॥ १५६९ ॥**

निश्चयेन यातमपगतं कारणं एकवारेणैव दत्ताहारैः यस्मिन्नसौ निर्यातकारणस्तस्मिन् साधोर्महत्तराः प्रयोजनविशेषास्तत्फलाभावात् आकारविशेषं न कुर्वन्ति । कान्तारवृत्तौ भिल्लपल्ल्यादिकान्तारपतने दुर्भिक्षतायां दुर्भिक्षभावे चशब्दा-

दुर्दैनाहारनिषेधिते च अत्र यत्क्रियते एतत् प्रत्याख्यानं निराकारम्, भावार्थस्तु भोज्यलाभामावादनाकारं प्रत्याख्याति यद्वा न जीवामीति ज्ञात्वाऽनाकारं प्रत्याख्याति। तत्राप्यनाभोगसहसाकारौ भवत एव। कदाचित् शलाकां काष्ठमङ्गुलि वा मुखे क्षिपेदनाभोगेन सहसा वा ॥ १५६९ ॥ परिमाणकृतमाह–

दत्तीहि उ कवलेहि व घरेहिं भिक्खाहिं अहव दवेहिं ।
जो भत्तपरिच्चायं करेइ परिमाणकडमेयं ॥ १५७० ॥

दत्तिभिरेकवारेणैव दत्ताहारैर्वा कवलैर्वा गृहैर्वा भिक्षाभिः संसृष्टादिभिरथवा द्रव्यैरोदनादिभिराहाराय सप्रमाणैर्या भक्तत्यागं कुर्यात्, तत्र दत्तिरेकवारेऽन्नपातः, कृतपरिमाणं प्रत्याख्यानमेतत् ॥ १५७० ॥ निरवशेषमाह–

सव्वं असणं सव्वं पाणगं सव्वखज्जभुज्जविहं ।
वोसिरइ सव्वभावेण एयं भणियं निरवसेसं ॥ १५७१॥

अशनं आर्द्रकमांसमप्तदशधान्यानि, एवं पानं खण्डपानादि, खादिमं फलादि, स्वादिमं दन्तपावनमध्वादि। सर्व-खाद्यभोज्यविधी खाद्यं इक्षुखण्डादि भोज्यं सर्वतः स्वाद्यं तयोर्विधी प्रकारौ सर्वप्रकारेण सर्वतो व्युत्सृजति। 'एवं' निरवशेषं निराकारं पार्यतेऽपि, इदं तु न पार्यते इति विशेषः ॥ १५७१ ॥ संकेतमाह–

अंगुट्ठमुट्ठिगंठीघरसेउस्सासथिबुगजोइक्खे ।
भणियं संकेयमेयं धीरेहिं अणंतनाणीहिं ॥ १५७२ ॥

अङ्गुष्ठमुष्टिग्रन्थिगृहस्वेदोच्छ्वासस्तिबुकज्योतिष्कान् चिह्नं कृत्वा यत्क्रियते प्रत्याख्यानम् । अयमर्थः पूर्णेऽपि पौरुष्यादिप्रत्याख्याने साधुः श्राद्धो वा यावन्न भुङ्क्ते तावत् किञ्चिच्चिह्नमभिगृह्णाति न युज्यतेऽप्रत्याख्यानिनः स्थातुं इति । ततोऽङ्गुष्टं यावन्न मुञ्चामि ग्रन्थिं यावन्न छोटयामि यावद् गृहं न विशामि यावत् स्वेदो न शुष्यति यावदेतावन्त उच्छ्वासाः पानीयमञ्चिकायां यावदेतावन्तः स्तिबुका बिन्दवोऽवश्यायपृषतो वा यावज्ज्योतिष्कशब्देन दीपो गृह्यते ततो यावदेष दीपो ज्वलति तावदहं न भोक्ष्ये । एतत्तु प्रत्याख्यानं संकेतं भणितं धीरम(रैर)नन्तज्ञानिभिः । न केवलं भक्तेऽन्येष्वप्यभिग्रहविशेषेषु संकेतं स्यात् । तेन सामायिकतुलनया ग्रन्थिसहितमपि प्रत्याख्याति श्राद्धः ॥ १५७२ ॥ अद्धामाह—

अद्धा पच्चक्खाणं जं तं कालप्पमाणछेएणं ।
पुरिमड्ढपोरिसीए मुहुत्तमासद्धमासेहिं ॥ १५७३ ॥

अद्धा काले प्रत्याख्यानं यत् तत् अद्धाप्रत्याख्यानम्, तत् कालप्रमाणछेदेन स्यात् पुरिमार्द्धपौरुषीभ्यां पश्चिमार्द्धेन च तथा मुहूर्त्तं नमस्कारसहितम् । एवं एकाशनोपवासदिवसद्वयादि यावत् मासार्द्धमासैः षण्मासैः स्यात् ॥ १५७३ ॥ अथ निगमयति—

भणियं दसविहमेयं पच्चक्खाणं गुरूवएसेणं ।
कयपच्चक्खाणविहिं इत्तो वुच्छं समासेणं ॥ १५७४ ॥
आह जइ जीवघाए पच्चक्खाए न कारए अन्नं ।
भंगभयाऽसणदाणे धुव कारवणे य नणु दोसे ॥ १५७५ ॥

कृतं प्रत्याख्यानं येन स तथाविधस्तस्य विधिं इतः समासेन संक्षेपेण वक्ष्ये ॥ १५७४ ॥ 'आह' अत्र पर आह यथा जीवघाते प्राणातिपाते प्रत्याख्याते सति असौ परेण जीवघातं न कारयति प्रत्याख्यानभङ्गभयात्, एवं कृतप्रत्याख्यान-स्याशनादिदाने ध्रुवं कारणादि जायते इति ननु दोषो लगति प्रत्याख्यानभङ्गरूपः ॥ १५७५ ॥ अतः

नो कयपच्चक्खाणो आयरियाईण दिज्ज असणाई ।
न य विरईपालणाओ वेयावच्चं पहाणयरं ॥ १५७६ ॥
नो तिविहं तिविहेणं पच्चक्खइ अन्नदाणकारवणं ।
सुद्धस्स तओ मुणिणो न होइ तब्भंगहेउत्ति ॥ १५७७ ॥

कृतप्रत्याख्यानः कृतोपवास आचार्यादिभ्योऽशनादि न दद्यात् । न च विरतिपालनाद्वैयावृत्त्यं गोचरचर्या प्रधानतरं

स्यात् ॥ १५७६ ॥ गुरुराह 'नो०' त्रिविधं करणकारणानुमतिरूपं त्रिविधेन मनोवाकायेन योगेन न प्रत्याख्याति आहारविषये तेन अन्यदानरूपं कारणं शुद्धस्य आशंसारहितस्य मुनेस्तद्भङ्गहेतुः प्रत्याख्यानभङ्गहेतुर्न स्यात् यस्तु लौल्यादन्यस्मै दत्ते मया न भुक्तं एष भुङ्क्ते, तस्य प्रमाददोषो लगति ॥ १५७७ ॥ किञ्च—

सयमेवणुपालणियं दाणुवएसो य नेह पडिसिद्धो ।
ता दिज्ज उवइसिज्ज व जहा समाहीइ अन्नेसिं ॥ १५७८ ॥

स्वयमेव प्रत्याख्यानं अनुपालनीयं इति निर्युक्तिकारेणोक्तम् । शक्तौ आत्मनाऽऽनीय दानं अशक्तौ यतीनां श्राद्धकुलादिकथनं तौ द्वौ इह न प्रतिषिद्धौ । तस्माद्द्यादुपदिशेद्वा यथासमाधिनाऽन्येभ्यो बालादिभ्यः ॥ १५७८ ॥ अमुमेवार्थमाह—

कयपच्चक्खाणो वि य आयरियगिलाणबालवुड्ढाणं ।
दिज्जासणाइ संते लाभे कयवीरियायारो ॥ १५७९ ॥

लाभे सति कृतवीर्याचारोऽशनादि दद्यात् । सत्यां शक्तौ अन्यो न प्रेष्यः वैयावृत्त्यं स्वयं कार्यम् । 'दाणे 'त्ति गतम्, उवदिसिज्ज वाऽलाभे सति ॥ १५७९ ॥ आह भाष्यकृत्

संविग्गअण्णसंभोइयाण देसेज्ज सड्ढगकुलाइं ।
अतरंतो वा संभोइयाण देज्जा जहसमाही ॥ २४७ ॥

श्रुतां दृष्टां वा दर्शयेत् नानीय दद्यादित्यर्थः। संग्निान्यसाम्भोगिकानां तूपदिशेत् यथैतानि श्राद्धकुलानि संखडिं च श्रुतां दृष्टां वा दर्शयेत् नानीय दद्यादित्यर्थः। सति सामर्थ्ये साम्भोगिकानां एकमण्डलीकानां ज्ञातेभ्योऽज्ञातेभ्यो अतरमशक्नुवन् सांभोगिकानामपि दिशेत् न दोषः। यथानमाधिर्नाम यथा यथा साधूनामात्मनो वा वा कुलेभ्यः संखड्या वानीय लब्धिमान् स्वयं दद्यात्। 'उवदेसो'त्ति गतम्, 'समाहि'त्ति गतम्। प्रत्याख्यानशुद्धिमाह समाधिः स्यात्तथा प्रयतितव्यम्। अक्षमस्यान्यमण्डलीसत्कस्याप्यानीय देयम्।

सोही पच्चक्खाणस्स छविहा समणसमयकेऊहिं।
पन्नत्ता तित्थयरेहिं तमहं वुच्छं समासेणं ॥ २४८ ॥

श्रमणसमयकेतुभिः साधुसिद्धान्तध्वजरूपैरर्हद्भिः प्रज्ञप्ता। यथा ध्वजः सर्वोच्चस्तथाऽर्हल्लोकोत्तरः। षड्विधत्वमेवाह

सा पुण सद्दहणा जाणणा य विणयाणुभासणा चेव।
अणुपालणा विसोही भावविसोही भवे छट्ठा ॥ १५८० ॥

सा शुद्धिरेवं षड्विधा श्रद्धानशुद्धिः १ जाननाशुद्धिः २ विनयशुद्धिः ३ अनुभाषणाशुद्धिः ४ अनुपालनाशुद्धिः ५ भावशुद्धिः ६ ॥ १५८० ॥ भाष्यम्, श्रद्धानशुद्धिमाह—

पच्चक्खाणं सवन्नुदेसिअं जं जहिं जया काले।
तं जो सद्दहइ नरो तं जाणसु सद्दहणसुद्धं ॥ २४९ ॥

पञ्च महाव्रतानि द्वादशधा श्राद्धधर्म्मः दशधोत्तरगुणप्रत्याख्यानमिति सप्तविंशतिः 'यत्' सप्तविंशति विधस्यान्यतमत् प्रत्याख्यानं 'यत्र' जिनकल्पादौ चतुर्यामादौ श्राद्धधर्मे वा 'यदा' सुभिक्षादौ दिवा रात्रौ वा पूर्वाह्णेऽपराह्णे वा 'काले' इति मरणे कर्त्तव्यं स्यात्। तत्र सप्तविंशतिभेदा एवं पञ्चविधं साधुमूलगुणप्रत्याख्यानं दशविधमुक्तमुत्तरगुणप्रत्याख्यानं द्वादशधा श्राद्धप्रत्याख्यानं चेति तद्यो नरः श्रद्धत्ते द्वा० १ ॥ २४९ ॥

पच्चक्खाणं जाणइ कप्पे जं जंमि होइ कायवं ।
मूलगुणे उत्तरगुणे तं जाणसु जाणणासुद्धं ॥ २५० ॥

यस्मिन् कल्पे चतुर्यामपञ्चयामरूपस्थितिकल्पे जिनकल्पादिके वा मूलोत्तरगुणविषयं कर्त्तव्यं स्यात् द्वा० २ ॥ २५० ॥

किइकम्मस्स विसोही पउंजई जो अहीणमइरित्तं ।
मणवयणकायगुत्तो तं जाणसु विणयओ सुद्धं ॥ २५१ ॥

विनयतो विनये(येन) शुद्धं प्रत्याख्यानकाले कृतिकर्मणो वन्दनस्य विशुद्धिं निरवद्यकरणक्रियां अन्यूनातिरिक्तां द्वा० ३ ।

अणुभासइ गुरुवयणं अक्खरपयवंजणेहिं परिसुद्धं ।
पंजलिउडो अभिमुहो तं जाणणुभासणासुद्धं ॥ २५२ ॥

कृतकृतिकर्मा प्राञ्जलिपुटो योजितहस्तोऽभिमुखः प्रत्याख्यानं कुर्वन्ननुभाषते गुरुवचनं लघुतरेण शब्देन भणतीत्यर्थः

अक्षरपदव्यञ्जनैः परिशुद्धम्। नवरं गुरुः पच्चक्खाइ वोसिरइ त्ति वक्ति। प्रत्याख्याता पच्चक्खामि वोसिरामि त्ति, शेषं सदृशमेव द्वा० ४ ॥ २५२ ॥

कंतारे दुब्भिक्खे आयंके वा महई समुप्पन्ने ।
जं पालियं न भग्गं तं जाणणुपालणासुद्धं ॥ २५३ ॥

कान्तारेऽरण्ये महत्यातङ्के रोगे वा यत् पालितं न भग्नम्, अत्र कान्तारादिष्वपि द्विचत्वारिंशद्भिक्षादोषान्न भनक्तीति भावः। तथापवादे यतनया सेवयाप्यभग्नमेवाऽन्यथापवादच्छेदः द्वा० ५॥ २५३ ॥

रागेण व दोसेण व परिणामेण व न दूसियं जं तु ।
तं खलु पच्चक्खाणं भावविसुद्धं मुणेयव्वं ॥ २५४ ॥

रागेण गुनादिमोहेन द्वेषेण क्रोधादिना यद्वा रागेण स्वपूजाहेतोः द्वेषेण परेषां अपूजाहेतोः तथा परिणामेन इहलोकनिर्गाढादिना कीर्त्यर्थिन्नपानगृहवस्तुशय्यादिहेतुना वा स्तम्भादिना वा वक्ष्यमाणेन न दूषितं यत् तत् भावशुद्धं प्रत्याख्यानं द्वा० ६ ॥ २५४ ॥

एएहिं छहिं ठाणेहिं पच्चक्खाणं न दूसियं जं तु ।
तं सुद्धं नायव्वं तप्पडिवक्खे असुद्धं तु ॥ २५५ ॥

षड्भिः स्थानकैः श्रद्धानादिभिः पालितैः प्रत्याख्यानं न दूषितं यदेव तच्छुद्धम्, तत्प्रतिपक्षेऽश्रद्धानादौ अशुद्धम् ॥ २५५ ॥ परिणाममाह—

थंभा कोहा अणाभोगा अणापुच्छा असंतई ।
परिणामओ असुद्धो अवाउ जम्हा विउ पमाणं ॥ २५६ ॥

स्तम्भाद्गर्वात् स्वगौरवार्थं १, क्रोधात् वृद्धनिर्भर्त्सनादेः २, अनाभोगाद्विस्मृतेः प्रत्याख्यानमज्ञात्वा वा भुङ्क्ते भोजनादनु स्मृतं प्रत्याख्यानं तेन भग्नं ३, अनापृच्छया स्वेच्छया गुर्वनुज्ञां विना भुङ्क्ते, चेत्प्रक्ष्यामि तदा वक्ष्यन्ति उपवासस्त्वया कृत इति ४, असंततिरसम्पत्तिस्तया यथात्र किञ्चिन्नास्ति ततो वरं प्रत्याख्यानम् ५, तथा इहलोकाद्यर्थं परिणामतोऽशुद्धं ६, एवं न कल्पते । तथाऽपायान्निष्कासनादिभिर्यो यत्कुरुते तदप्यसाधु तस्माद्विद्वान् क्रियायुक्तः प्रमाणम् । स जानन्नन्यथा न करोति तस्य शुद्धं स्यादित्यर्थः ॥ २५६ ॥ इयता 'पच्चक्खाणं पच्चक्खाओ' इत्याद्यगाथायाः प्रत्याख्यानपदं व्याख्यातं अत्राऽन्तरेऽध्ययनशब्दः प्राग्वत् । सूत्रालापकनिष्पन्ने निक्षेपे सूत्रम्—सूरे उग्गए नमोक्कारसहियमित्यादि यावत् सहसागारेणं वोसिरइ—

सूरे उग्गए नमोक्कारसहियं पच्चक्खाइ चउव्विहं पि आहारं असणं पाणं खाइमं साइमं, अण्णत्थऽणाभोगेणं सहसागारेणं वोसिरइ ॥ ( सूत्रम् )

सूर्ये उद्गते नमस्कारसहितं मुहूर्त्तादिना नमस्कारकथनादर्वाक् प्रत्याख्याति । चतुर्विधमप्याहारम् । 'अश्' भोजने, अश्यते इत्यशनं मण्डकाद्रकादि ( मण्डकौदनादि ) । पीयते इति पानं जलादि । 'खाद' भक्षणे, खाद्यते इति खादिमं

इति स्वादिमं गुडदन्तपावनसंमुखशक्यादि ( गुडताम्बूलपुगफलादि )।
फलमुखमक्षिकादि । स्वाद आस्वादने स्व(स्वा)द्यते इति स्वादिमं ... अनाभोगसहसाकारौ मुक्त्वाऽन्यत्र
पर अनाभोगात् अत्यन्तविस्मृत्या अन्यत्र सहसाकारः सहसाऽजानतो मुखक्षेपस्तस्मादन्यत्र । अनाभोगसहसाकारौ मुक्त्वाऽन्यत्र
चतुराहारं प्रत्याख्यातीत्यर्थः, एवं व्युत्सृजति चतुराहारान् । अत्र सूत्रस्पर्शिनिर्युक्तिः

असणं पाणगं चेव खाइमं साइमं तहा ।
एसो आहारविही चउविहो होइ नायव्वो ॥ १५८१ ॥

आहारविधिराहारप्रकारः ॥ १५८१ ॥ निरुक्तिमाह—

आसुं खुहं समेई असणं पाणाणुवग्गहे पाणं ।
खे माइ खाइमं ति य साएइ गुणे तओ साई ॥ १५८२ ॥

आशु शीघ्रं क्षुधं शमयतीत्यशनं १ । प्राणानामिन्द्रियादीनामुपग्रहे उपकारे यद्वर्तते तत्पानं, खमित्याऽऽस्याकाशं तत्र मातीति खादिमं । स्वादयति गुणान् मरसाहारान् जारयति स्वादयति संयमं भक्षते वा तत्स्वादिमं सर्वत्र निपातात् सिद्धम् ॥ १५८२ ॥ चालनामाह—

सव्वो वि य आहारो असणं सव्वो वि वुच्चई पाणं ।
सव्वो वि खाइमं ति य सव्वो वि य साइमं होई ॥ १५८३ ॥

यद्यनन्तरोक्तपदार्थापेक्षयाऽशनादीनि स्युस्तदा सर्वोऽपि चतुर्द्धाप्याहारोऽशनं सर्वोऽपि वोच्यते पानं इत्यादि, कथं ? अन्वर्थैक्यात्, यतः यथैवाशनं क्षुधं शमयत्येवं पानं क्षीरपानाद्यपि क्षुधं शमयति । यथा पानं प्राणानुग्रहे वर्त्तत एवमशनादीन्यपि । तस्मादयुक्त एवं भेदः ॥ १५८३ ॥ अथ प्रत्यवस्थानम्, गुरुराह–यद्यप्येतदेवं तथापि रूढितो नीतितः प्रयोजनं च संयमोपकारकमस्त्येवं कल्पनयाऽन्यथा दोषस्तथा चाह–

जइ असणमेव सव्वं पाणग अविवज्जणंमि सेसाणं ।
हवइ य सेसविवेगो तेण विहत्ताणि चउरो वि ॥ १५८४ ॥

यद्यन्वर्थाश्रयादशनमेव सर्वमाहारजातं गृह्यते ततः शेषाणां लोकरूढानां पानकादीनां अविवर्जनं स्यात्, भवति च शेषविवेकोऽस्ति च शेषाहारभेदपरित्यागो न्यायोपपन्नत्वात् । स चेह विदुषां सम्भवति । तेन विभक्तानि चत्वार्यप्यशनादीनि ॥ १५८४ ॥ एवं तु सामान्यविशेषभेदनिरूपण सुखज्ञेयं स्यात् सुखश्रद्धेयं च स्यात् । अन्यथा द्विविधं त्रिविधं चतुर्विधमप्याहारप्रत्याख्यानं न घटते, तदाह

असणं पाणगं चेव खाइमं साइमं तहा ।
एवं परूवियंमी सद्दहिउं जे सुहं होइ ॥ १५८५ ॥

श्रद्धातुं 'जे' पादपूर्त्यै, सुखं स्यात् । उपलक्षणाद्दीयते पाल्यते च सुखम् ॥ १५८५ ॥ आह मनसाऽन्यथा चिन्तिते

प्रत्याख्याने त्रिविधस्य पौरुष्या वा प्रत्याख्यानं करोमीति वागन्यथा निर्गता चतुर्विधस्य पुरिमार्द्धस्येति, गुरुणापि तथैव दत्तमत्र कः प्रमाणम् ? उच्यते शिष्यस्य मनोगतो भाव इति, यतः

अन्नत्थ निवडिए वंजणंमि जो खलु मणोगओ भावो ।
तं खलु पच्चक्खाणं न पमाणं वंजणच्छलणा ॥ १५८६ ॥

अन्यत्र इति द्विविधं प्रत्याख्यामीति स्थाने त्रिविधं चतुर्विधं वा प्रत्याख्यामि इति व्यञ्जने शब्दे निपतिते सति यः खलु मनोगतो भावः प्रत्याख्यापयितुरधिकृतसंयमयोगाक्षिप्तचेतसो न तु प्रमादात् तत् खलु प्रत्याख्यानं प्रमाणम्। एतेनान्तरालस्थसूक्ष्मनिरीक्षानिषेधमाह । निश्चिताशयस्यैव प्रामाण्याधिकृतत्वात् व्यञ्जनं शिष्याचार्यवचनं न प्रमाणम्, यतः छलनाभो व्यञ्जनरूपा ॥ १५८६ ॥ प्रत्याख्यानपालनमाह—

फासियं पालियं चेव सोहियं तीरियं तहा ।
किट्टिअमाराहिअं चेव एरिसयंमी पयइयव्वं ॥ १५८७ ॥

स्पृष्टं प्रत्याख्यानग्रहणकाले विधिना प्राप्तं १ । पालितं पुनः पुनरुपयोगप्रतिजागरणेन रक्षितं २ । शोभितं गुर्वादिप्रदानशेषभोजनासेवनेन ३ । तीरितं पूर्णेऽप्यवधौ यत्किञ्चित्कालावस्थानेन ४ । कीर्त्तितं भोजनवेलायाममुकं प्रत्याख्यानं पूर्णमित्युच्चारणेन ५ । आराधितमेभिरेव कारणैः सम्पूर्णं कृतं ६ । ईदृशि प्रत्याख्याने प्रयतितव्यम् । अत्र क्षेपकगाथा ' उचिए

काले विहिणा जं पत्तं फासियं ति तं ( फासियं तयं ) भणियं १ । तं पालियं जमसयं ( तह पालियं च असइं ) सम्मं उवओगपडियरियं २ ॥ १ ॥ गुरुदत्तसेसभोयणसेवणयाए विसोहियं ( य सोहियं ) ३ जाण । पुण्णे वि थेवकालावथा(त्था)णा तीरियं ४ होइ ॥ २ ॥ भोयणकाले अमुगं पच्चक्खायं ति भुंजओ किंत्तियं ५ । आराहियं पयारेहिं सम्ममेएहिं निट्ठिव(ट्ठवि)यं ६ ॥ ३ ॥ निष्ठापितं पूर्णीकृतं ॥ १५८७ ॥ प्रत्याख्यानगुणाः तथा विस्मृत्या सहसा वा नमस्कारेऽकृते मुखे क्षिप्तं स्यात्, स्मृते यत् मुखे क्षिप्तं स्यात् स्मृते यत् मुखे तत् खेलमल्लके यद् हस्ते तत्पात्रे मुक्त्वा नमस्कारं कृत्वा भुङ्क्ते एवं न भग्नम् । यत एवमप्याहारान्निवृत्त इति ।

पच्चक्खाणंमि कए आसवदाराइं हुन्ति पिहियाइं ।
आसववुच्छेएणं तण्हावुच्छेअणं होइ ॥ १५८८ ॥

प्रत्याख्याने कृते आश्रवद्वाराणि कर्मागमद्वाराणि पिहितानि स्युः, आश्रवव्युच्छेदनं स्यात् । तृष्णा विषयेच्छा ।

तण्हावोच्छेदेण य अउलोवसमो भवे मणुस्साणं ।
अउलोवसमेण पुणो पच्चक्खाणं हवइ सुद्धं ॥ १५८९ ॥

अतुलोपशमो मध्यस्थः भावः स्यात् ॥ १५८९ ॥

तत्तो चरित्तधम्मो कम्मविवेगो तओ अपुव्वं तु।
तत्तो केवलनाणं तओ अ मुक्खो सयासुक्खो ॥ १५९० ॥

ततः प्रत्याख्यानात् शुद्धचारित्रधर्म्मः स्फुरति। ततः कर्मविवेकः कर्मनिर्जरा। ततः क्रमेणापूर्वकरणं। छद्मस्थाऽध्यावपूर्वगुणाध्यवसायः। ततः श्रेणिक्रमेण केवलज्ञानं। ततश्च मोक्षः सदासौख्यः ॥ १५९० ॥ इदं च प्रत्याख्यानं दशविधं स्याद्याकारैः सह गृह्यते पाल्यते च, तदाह–

नमोक्कारपोरिसीए पुरिमड्ढेगासणेगठाणे य ।
आयंबिल अभत्तट्ठे चरमे य अभिग्गहे विगई ॥ १५९१ ॥

नमस्कारसहिते १ पौरुष्यां २ पुरिमार्द्धे ३ एकाशने ४ एकस्थाने ४ च ५ आचाम्ले ६ अभक्तार्थे ७ चरमे च ८ अभिग्रहे ९ विकृतौ १० यथासङ्ख्यमेते आकाराः ॥ १५११ ॥

दो छच्च सत्त अट्ठ सत्तट्ठ य पंच छच्च पाणंमि ।
चउ पंच अट्ठ नव य पत्तेयं पिंडए नवए ॥ १५९२ ॥

द्वौ १ षट् २ सप्त ३ अष्टौ ४ सप्त ५ अष्टौ ६ पञ्च ७ एते नमस्कारादिषु सप्तप्रत्याख्यानेषु क्रमेण ज्ञेयाः, पानके च

षट्, सामान्याभिग्रहे च चत्वारः पञ्च वा, निर्विकृतौ विकृतौ च अष्ट नव वा । तत्र निर्विकृतिर्द्विधा लेपाक्तं अलेपाक्तं च । अलेपाक्तनिर्विकृतौ द्रवविकृतिप्रत्याख्यानेन 'उक्खित्तविवेगेणं'ति पदं नोच्चार्यते अतोऽष्ट नव वेत्याकाराः । प्रत्येकमेवमाकारा ज्ञेयाः । पिंडके समूहवचने च नवैव आकाराः कथ्यन्ते । यथा सामान्याभिग्रहे ४, 'अवाउडत्तं' पच्चक्खामीत्यभिग्रहे ५ द्वयोर्मीलने ९ । समूहवचने निर्विकृतौ विकृतौ च नवेति कथनं विशेषव्याख्या वाग्रे तथाकारेत्याद्याऽन्यग्रन्थासंमतपिण्डको द्रवविकृतिरूपः नवको नवाकारवान् स्यादित्यर्थः । पिण्डकः समूहो नवकः नवसङ्ख्याक इति । जीवाः त्रयोदशक्रियास्थान-वर्तित्वात् त्रयोदशभेदाः एवं द्वाविंशतिसङ्ख्या जाता, एतावन्तः सर्वे आकाराः स्युः । यथा अन्नत्थणाभोगेणं ४ चत्वारः आकाराः, पच्छन्नकालेणं ३ त्रय आकाराः, लेवालेवेणंमुख्याः ५ पञ्चाकाराः, सागारियागारेणंमुख्याः ३ त्रय आकाराः, तथा चोलपट्टागारेणं १ अधिकः, लेवाडेणवामुख्याः ६ षट् आकाराः, एवं सर्वे प्रत्याख्यानाकाराः २२ जायन्ते । अत्र लघुवृत्तिव्याख्या नवकेति ९ आकारेत्याद्यान्यग्रन्थासंमतौ च मूलवृत्त्यादीनां च ॥ १५९२ ॥ व्यक्त्याह

दोच्चेव नमुक्कारे आगारा छच्च पोरिसीए उ ।
सत्तेव य पुरिमड्ढे एगासणगंमि अट्ठेव ॥ १५९३ ॥
सत्तेगट्ठाणस्स उ अट्ठेवायंबिलंमि आगारा ।
पंचेव अभत्तट्ठे छप्पाणे चरिमि चत्तारि ॥ १५९४ ॥

पंच चउरो अभिग्गहि निव्वीए अट्ठ नव य आगारा।
अप्पाउराण पंच उ हवन्ति सेसेसु चत्तारि ॥ १५९५ ॥

सूरे उग्गए नमोका० अन्नत्थणाभोगेणं सहसागारेणं

आकारः प्रत्याख्यानापवादहेतुः। द्वावेवाकारौ नमस्कारसहिते यथा 'सूरे उग्गए नमोका० अन्नत्थणाभोगेणं सहसागारेणं' प्रत्याख्यामि त्यजामि स्वीकुर्वे २ इति। व्याख्या सूर्ये उद्गते सति नमस्कारसहितमिति नमस्कारभणनोपलक्षितकालसहितं प्रत्याख्यामि त्यजामि स्वीकुर्वे चतुर्विधमप्याहारं शेषं प्राग्वत्। इदं चतुर्विधाहारस्यैव। मुहूर्त्तात्परतो भोजनकाले वा नमस्कारोच्चारेण 'मत्थएण वंदामो खमासमणो णमोक्कारं पारेमि त्ति' पार्यतेऽन्यथा सूर्यास्तमनेऽपि न इति वृद्धाः। पौरुषी द्विविधाद्याहाराऽपि स्यादिति वृद्धाः तस्यां पट्। इह सूत्रं 'पोरिसिं पच्चक्खाइ उग्गए सूरे' इत्यादि—

पोरिसिं पच्चक्खाइ उग्गए सूरे चउव्विहं पि आहारं असणं पाणं खाइमं साइमं अण्णत्थऽणाभोगेणं सहसाकारेणं पच्छन्नेणं कालेणं दिसामोहेणं साहुवयणेणं सव्वसमाहिवत्तियागारेणं वोसिरामि (सूत्रम्) ॥

दिनचतुर्भागमानकालेन पुरुषप्रमाणच्छायया निवृत्ताऽद्धा पौरुषी उच्यते, तां यावत् चतुर्विधाहारं प्रत्याख्यामि अन्यत्राभोगेन सहसाकारेणेति प्राग्वत्। तथा 'पच्छन्नेणं कालेणं' रजोवृष्ट्यादिना सूर्ये स्थगिते प्रच्छन्नेन कालेनेति तृतीया पञ्चम्यर्थे प्रच्छन्नकालादन्यत्रेत्यर्थः। प्रच्छन्नकाले सवेलमपि पारणे मा भङ्गः। अत्रापि भुञ्जानस्य पौरुष्यपूर्णताज्ञाने मुखस्थं श्लेष्ममात्रं करस्थं पात्रे मुक्त्वा मिथ्यादुष्कृतं दत्त्वा काले पूर्णे मनसा पारयित्वा भुङ्क्ते। दिग्मोहात् पूर्वां प्रति पश्चिमाबुद्ध्या

शीतकाले वा दिग्मोहः स्यात् । साधुवचनेन यथा साहुणो भणन्ति उग्घाडपोरिसी ततः पारयित्वा भुञ्जानः केनाप्युक्तः सकाल इति ततः स्थातव्यं । सर्वसमाधिप्रत्ययाकारात्समाधिप्रत्ययादेवापवादादन्यत्राहारान् व्युत्सृजामि स्वस्यान्यस्य चार्त्त-रौद्रध्यानपरिहारेण समाधिकरणहेतोराहारमपि गृह्णामि अन्यथा तु प्रत्याख्यामीत्यर्थः । समाही नाम तेण पोरुसी पच्चक्खाया आसुकारियं दुक्खं जायं, गाढपीडा तस्स अन्नस्स वा तेण किं कायवं ? ताहे तस्स पसमणनिमित्तं पाराविज्जइ उस्स(ओस)हं वा दिज्जइ वैद्यादिर्वाऽऽगाढग्लानसारकः पौरुष्यां कृतायां पौरुष्यामपूर्णायामपि भुङ्क्ते न भङ्गः । अर्द्धभुक्तो वा ग्लाना(न)समाधिमृती श्रुत्वा शेषान्नं त्यजति । सप्तैव पुरिमार्द्धे आद्ययामद्वयप्रत्याख्याने 'सूरे उग्गए पुरिमड्ढं पच्चक्खाइ चउव्विहं पि आहारं असणं पाणं खाइमं साइमं अन्न० सह० पच्छ० दिसा० साहु० मह० सव्व० '। अर्थः प्राग्वत् । साधुवचनेनेति केनापि भव्यपुंसा उक्तं यथा पुरिमार्द्धो जात इति । महत्तराकारो लाभविशेषाकारः महत्तरं प्रत्याख्यानपालननिर्जराधिक-लाभहेतुं अन्यनरासाध्यं ग्लानचैत्यसंघादिकार्यं तदेवाकारः प्रत्याख्यानापवादस्तस्मादन्यत्र । सार्द्धपौरुषीप्रत्याख्यानं पौरुषी-वदिति प्रकरणानि । एकाशने अष्टैवाकाराः एकाशनं स्थिरोपविष्टपुताचालनेन भोजनम्, सूत्रम्—

**एकासणं पच्चक्खाइ चउव्विहं पि आहारं असणं पाणं खाइमं साइमं अण्णत्थऽणाभोगेणं सहसागारेणं सागारियागारेणं आउंटणपसारणेणं गुरुअब्भुट्ठाणेणं पारिट्ठावणियागारेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं वोसिरामि ॥ ( सूत्रम् )**

एकाशनं एकस्थनाहारं प्रत्याख्यामि स्वीकरोमि 'चउ० अन्न० सह० सागारियागारेणं' सह आगारेण वर्त्तन्ते इति

आगतैः आकारात् अपवादकारणात् अन्यत्र प्रत्या-
सागारिकाः, इहाधिकारात्साधूनां गृहिणः श्राद्धानां वान्दिकाद्याः तैः आगतैः आकारात् अपवादकारणात् अन्यत्र प्रत्या-
ख्यानं । सागारियं अद्धसमुद्दिसियस्स आगयं जइ वोलेइ पडिच्छइ प्रतीक्ष्यते, अह थिरं ताहे सज्झायवाघाउ त्ति उट्ठेउं अन्नत्थ
गन्तूण समुद्दिस्सइ । आउं० आकुञ्चनं पादादेराकर्षणं, प्रसारणं पादादिप्रलम्बकरणं ताभ्यामन्यत्र । हत्थं वा पायं वा सीसं वा
पसारिज्ज न सक्कइ । गुरुअब्भु० आयरिया पाहुणगो वा आगओ अब्भुट्ठेयव्वं तस्स । एवं समुद्दिट्ठस्स उद्धियस्स पारिट्ठावणिया
जइ होज्ज कप्पइ । पारिट्ठा० परिष्ठापना त्यजना तया संसृष्टः पारिष्ठापनिकोऽधिकारादाहारस्तस्याकारादपवादादन्यत्रेत्यादि
वोसिरामि व्युत्सृजामि आहारं । सप्तैकस्थानस्य तु । एकस्थानं नाम प्रत्याख्यानं यथा 'एगट्ठाणं पच्च०' एगट्ठाणए जहा
अंगोवंगं ठवियं तेण तहाठिएण चेव समुद्दिसियव्वं । अत्र आउंटणपसारणं नत्थि शेषमेकाशनवत् । अष्टैवाचामाम्लस्या-
काराः । इदं चाग्रे 'गोण्णं नामं तिविहं' इत्यादिना ग्रन्थेन व्याख्यास्यते । सूर्योद्गमादनु भक्तार्थस्य, भक्तेनार्थो भक्तार्थः
न भक्तार्थं अभक्तार्थं उपवासं इत्यर्थः, प्रत्याख्यामि सूर्योद्गमादित्युक्तो भोजनादनु प्रत्याख्याननिषेधः, तस्य पञ्चाकाराः—
'सूरे उग्गए अभत्तट्ठं० अन्न० सह० पारि० मह० सव्व० । जइ तिविहस्स पच्चक्खाइ तो विगिंचणया कप्पइ । जइ चउव्वि-
हस्स पच्चक्खाइ पाणगं च अहियं नत्थि ततोऽकल्प्यं जइ पाणगं वि उव्वरियं ताहे से कप्पइ । सर्वप्रत्याख्यानानि चतुर्विधा-
हारत्यागेन क्रियन्ते । जइ तिविहस्स पच्चक्खाइ ताहे सपाणगस्स छ आगारा कीरन्ति । पानस्य षट् आकाराः 'लेवाडेण
वा' लेपयुक्तेन द्राक्षाजलादिना तक्रादिपतनेन सलेपेन जलेन च । 'अलेवाडेण वा' लेपचोपडितभाजनादिजलस्यागालयित्वा
लेपयुक्तं कृतं तेन । अच्छेन निर्मलकाञ्जिकादिना, बहलेनायामगुडि(गड्ड)लघावनजलेन । ससिक्थेन सिक्थपतनेन तन्दुलादि-

सद्भावेन च । असिक्थेन वा सिक्थापनयनेन, वाशब्दाः समुच्चयार्थाः । अत्र प्रकरणगाथा 'लेवाडदक्खपाणाइ इयरसोवीरमच्छमुसिणजलं। बहलं धावणमायाम ससित्थं इयरसित्थविणा' ॥ १ ॥ इत्याकारार्थः । एवंविधेन पानकेन विनाऽन्यं त्रिविधमाहारं व्युत्सृजामि रात्रौ पानकाहारप्रत्याख्यानं न स्यात् सर्वजिनैर्निशाभोज्यस्य निषिद्धत्वात्, रात्रिभोजने च मूलव्रतविराधनाभावात् । श्राद्धानामपि यद्रात्रौ जलपानं तदप्युत्सर्गतोऽकल्प्यं, तेन निर्विकृत्यादिषु तपोविशेषेषु निशासु जलं न पिबन्ति । पानकाकारेषु त्वशनादिलेपोऽस्ति अशनखादिमे च श्राद्धे रात्रिभोज्यनिषेधे निषिद्धे । तदा तु पानकाकारा नोक्ताः किन्तु दशाकारा राजाभियोगाद्या उक्ताः । तेन श्राद्धा रात्रौ सान्नलेपं नीरं न पिबन्ति । अपवादे तु दिनगलितालेपोत्कालिताम्बु उत्कटरक्षाक्षेपणपरिणतगलिताम्बु च पिबन्ति । मुख्यतः सचित्तत्यागो निशाभोज्यत्यागादन्वेव युक्तः प्रतिमासु तथादर्शनात् । ततः केऽप्यशक्त्याऽम्बु पिबन्ति परं पानकाकारा नोक्ता एव । चरमे चत्वार इति, चरमं द्विधा दिवसचरमं भवचरमं च । द्वयोरपि चत्वारः—अन्न० सह० मह० सव्व० । भवचरमं यावज्जीवं स्यात् । दिवसचरमं द्विविधादि स्यात् । भवचरमं त्रिविधाद्येवेति वृद्धाः । ततो नमस्कारस्मरणादिचतुर्विधप्रत्याख्यानं क्रियते तत्पारयित्वाऽनशनी पानं पिबति । पञ्च चत्वारश्चाभिग्रहे । तथा निर्विकृतौ अष्ट नव वाकाराः । तत्राभिग्रहेषु अप्रावरणेऽप्रावरणाभिग्रहे पञ्चाकाराः । यथा कोऽपि अवाउडत्तं पच्चक्खाइ । तत्र अन्न० सह० चोलपट्टागारेणं मह० सव्व० । शेषेष्वभिग्रहेषु दण्डकप्रमार्जनादिषु ग्रन्थिसहितादिषु च चोलपट्टाकारं विना चत्वार आकाराः । अप्रावृत्तत्वे नियमिते सागारिकागमे चोलपट्टं गृह्णातीत्यर्थः । निर्विकृतौ अलेपसंज्ञे द्रवविकृतौ वाष्टाकाराः । अन्यस्मिन्निर्विकृतौ विकृतिप्रत्याख्याने च नव । तत्र दश विकृतयः ।

खीरं दधि नवणीयं घयं तिल्लं गुलो मधु मज्जं मंसं ओगाहिमं च १०। तत्र विगईओ पच्चक्खामीति प्रमाणकृतशेषा
विकृतीः प्रत्याख्यामि त्यजामि। 'निविगइयं पच्चक्खाइ' निर्विकृतिकं विकृतीनां निषेधं प्रत्याख्यामि स्वीकुर्वे।
'आं(आयं)बिलं पच्चक्खाइ' आयामं अवश्रामणं, अम्लं तुर्यो रसस्ताभ्यां निष्पन्नं आयामाम्लं प्रत्याख्यामि स्वीकुर्वे। अन्न० सह०
लेवालेवेणं, लेपो भाजने निषिद्धविकृतेर्लगनं यद्वा निर्विकृतौ विकृतिलेपः तस्मिन् दूरे कृतेऽन्यभक्तं अलेपमिव स्यात् ततो
लेपालेप उच्यते। तस्माल्लेपालेपादन्यत्र निर्विकृतिकं प्रत्याख्यामि। आयामाम्ले चेत्पात्रे लेपवदात्तं समुद्दिष्टं संलिखितं च तेन
गाऽऽनयति निर्लेपं ततो न दोषः। 'उक्खित्तविवेगे' आयामाम्लार्हे विकृत्यादि पतितमुत्क्षिप्य विविच्यते विभिन्नं क्रियते मा
गलतीति। अन्यदप्यानाम्लानर्हे उद्धर्तुं शक्यं तदा कल्पते नान्यथा। 'गिहत्थसंसट्ठेणं' गृहिणा स्वार्थे निषिद्धविकृतिः
लोहादिना संसृष्टा कुसणिताऽस्ति। एष आकारो निस्पृहयतेरेव स्यान्न तु श्राद्धस्येति वृद्धाः। इह चेद्गृही कुसणादिना तल्लेपयुग्
ओदनाद्यादिना दत्ते तदा कल्प्यं यदि रसो दृश्यते ततोऽकल्प्यं। एष गृहस्थसंसृष्टाकार आचामाम्लादन्यत्रे निर्युक्तिकृता
व्याख्यायते। 'उक्खित्तविवेगेणं' उत्क्षिप्ते विकृतिद्रव्ये पोलिकादिगते पृथक्कृते सति विवेको विकृतिपार्थक्यं तस्मादन्यत्र,
यथा पोलिकायां शीतं(तं) गाढस्त्यानघृतं पिण्डगुडो वा कठिनं गलितं दधि वाऽभूत्तद् दूरीकृतं ततो लेपो न ज्ञायते।
एष उक्खित्तविवेकः। 'पडुच्चमक्खिएणं' प्रतीत्य ज्ञात्वा सर्वरूक्षमण्डकादिकमपेक्ष्य सौकुमार्योत्पादनायेषत् स्नेहेन म्रक्षितं
न तु गाढं स्नेहस्याढभावाद्यन्म्रक्षिताभाममित्यर्थः, पोलिकादि धारां विना गृहिणा स्वार्थे अङ्गुल्याऽऽज्येन तैलेन
वा म्रक्षितं प्रतीत्यम्रक्षितं तस्मादन्यत्र। पारिट्ठावणियागारात् परिष्ठापनार्हविकृत्याकारादन्यत्र। तत्र बहुन्नाप्तौ चेत् स्तोकं

वृद्धं तदा नमस्कारपौरुषीवतां देयं पारणकवतां वाऽसहानां वा देयं, यथा पारिष्ठापनिकाहारः कल्प्यः तदग्रे वक्ष्यते । विकृतिके निर्विकृतिके च अद्रवविकृतिषु नव द्रवविकृतिष्वष्टाकारा ज्ञेयाः । शेषं प्राग्वत् । अष्टनवाकारयुक्तिं वक्ति—

नवणीओगाहिमए अद्दवदहि(व) पिसियघयगुले चेव ।
नव आगारा तेसिं सेसदवाणं च अट्ठेव ॥ १५९६ ॥

नवनीते अवगाहिमके अद्रवदध्नि गालिते इत्यर्थः, पिशिते मांसे घृतगुडे चैव, अद्रवत्वं सर्वत्र ज्ञेयं । अमूषां विकृतीनां नवाकारा स्युः । शेषद्रवाणां शेषाणां द्रवाणां विकृतीनां विलीनघृततैलद्रवगुडादीनामष्टावाकाराः उत्क्षिप्तविवेको न स्यादित्यर्थः ॥ १५९६ ॥ अथाचामाम्लं–

गोण्णं नाम तिविहं ओअण कुम्मास सत्तुआ चेव ।
इक्किक्कं पि य तिविहं जहन्नयं मज्झिमुक्कोसं ॥ १५९७ ॥

आयामाम्लमिति गौणं नाम । आयामोऽवश्रामणं आम्लं चतुर्थरसः ताभ्यां निर्वृत्तं आयामाम्लं । इदं चोपाधिभेदा-त्रिधा–ओदनः धवलधान्यमित्यर्थः, कुल्माषाः काष्टद्विदलमित्यर्थः, सक्तवो लोट्ट इत्यर्थः, ओदनादीनधिकृत्य स्यादिति । आचामाम्ले पक्वधान्यं निर्नखिकमप्यकल्प्यं मरीचजीरकादियुक् करीरादिफलानि च धान्यस्थानीयानि, पृथग् लवणं चाकल्प्यं उत्सर्गेऽनुक्तत्वात् । एकैकं ओदनादि त्रिविधं स्यात् । जघन्यं मध्यमं उत्कृष्टं स्यात् ॥ १५९७ ॥ कथमित्याह–

दव्वे रसे गुणे वा जहन्नयं मज्झिमं च उक्कोसं ।
तस्सेव य पाउग्गं छलणा पंचेव य कुडंगा ॥ १५९८ ॥

द्रव्ये गुणे रसे च । द्रव्यं गुणं रसं चाश्रित्येत्यर्थः । किं जघन्यं मध्यमं उत्कृष्टं च ? तथा तस्यैवाचाम्लस्य प्रायोग्यं । तथा छलना तथा पञ्चैव कुडंगा वक्रवादित्वभावा वक्तव्याः । तत्र आचामाम्लयोग्यं द्रव्यमुत्कृष्टं शालिगोधूमकुल्माषादि यद्यस्मै रोचते, रस उत्कृष्टः शाल्यादिरवश्रावणादिना, गुणो निर्जरारूपः स तदा जघन्यः स्यात् । जघन्यं द्रव्यं रालक-कोद्रवादिः, रसो जघन्यो यद्यस्मै नेष्टं उष्णाम्भो वा, तेन गुण उत्कृष्टो निर्जरारूपः । मध्यमद्रव्यरसयोर्गुणो निर्जरा मध्या स्यात् । अत्रायं वृद्धाम्नायः-आचाम्लं नाम सप्तधा शालिकूरादिद्रव्यं तद्भेदाश्च । तेनाचाम्लं क्रियते उपचारात्त-द्प्याचाम्लमुक्तं, इदं चोत्कृष्टत्वात्प्रायो न गृह्यत एव । आचामाम्लप्रायोग्यं तन्दुलकणिकापिष्टपोलिकामण्डकादि, अस्य च निरपवादप्रासुकत्वात् प्रायोग्यत्वमुक्तम् । एवं कुलमाषाद्या आचामाम्लप्रायोग्यं तुषमिश्रितकणिकादिसक्तवो जवादीना[माचा]-माम्लप्रायोग्यं धान्यमण्डकादि । आचामाम्लेऽपक्वतन्दुलादि प्रासुकमप्यकल्प्यं ओदनादीनामेवोक्तत्वात् । फलिकाः पलि-मन्थनान्मर्दितशालाः किं पुनराचामाम्ले ?। तत्र कलमशालिकूरो द्रव्यत उत्कृष्टं द्रव्यं तत्सत्केनायामेन रसत उत्कृष्टं गुणतो जघन्यम् । स एव कूरोऽन्येषामायामैर्द्रव्यत उत्कृष्टो रसतो मध्यो गुणतोऽपि मध्यः, यदोष्णाम्बुना तदा रसतो जघन्यं गुणतो मध्यमम् । ओन(नण्ड)लोदना द्रव्यतो मध्यमा काञ्जिकेन रसोत्कृष्टा आयामेन रसमध्या उष्णोदकेन रसजघन्या एते त्रयो

गुणेन मध्या मध्यमद्रव्यत्वात् । रालगादितृणकूरा द्रव्यतो जघन्याः, ते काञ्जिकायामाभ्यां रसोत्कृष्टमध्या गुणमध्या उष्णोदकेन तदा जघन्यं द्रव्यं रसो जघन्यः गुण उत्कृष्ट इत्यादि । अहवा उक्कोसोक्कोसं, उक्कोसमज्झिमं, उक्कोसजहन्नं । कंजियआयामउण्होदएहिं जहन्ना मज्झिमा उक्कोसा निज्जरा । एवं त्रिष्वपि ज्ञेयं । तथा छलना इयं, यथा कोऽप्याचाम्लं प्रत्याख्याय विकृतीर्भोक्तुं उपविष्टः । गुरुरूचे कथमेवं ? स ऊचे यथा हिंसां प्रत्याख्याय सा न क्रियते एवमाचाम्लं प्रत्याख्याय तत्कथं क्रियते ? इति छलना । गुरुराह भो ! प्रत्याख्याननियमव्रतादिशब्दाः प्रवृत्तिनिवृत्त्यर्थास्ततोऽत्र प्रवृत्त्यर्थः प्रत्याख्यानशब्दो ज्ञेयः ॥ १५९८ ॥ अथ कुडङ्गाः—

लोए वेए समये अन्नाणे खलु तहेव गेलन्ने ।
एए पंच कुडंगा नायव्वा अंबिलंमि भवे ॥ १५९९ ॥

केनाप्याचामाम्लं कृत्वा संखडिं दृष्ट्वा संखड्यां पक्वान्नाद्यटित्वाचार्येभ्योऽदर्शि । गुरुरूचे त्वयाचामाम्लं प्रत्याख्यातमस्ति । स ऊचे मया क्वापि लोके लोकशास्त्रेषु तथा वेदे तथा समये चरकादिसिद्धान्ते मयाचामाम्लं नादर्शि ततः किं आचामाम्लं ? एवं त्रयः कुडङ्गाः मायाभेदाः । तथाऽज्ञानेऽहं न जाने कथमाचामाम्लं क्रियते, मया ज्ञातं घृतेन भक्तमार्द्रीकृत्य भुज्यते इति ४ चतुर्थः कुडङ्गः । तथा ग्लानोऽहं शूलं समेति न क्षम आचामाम्लं कर्तुं पञ्चमः कुडङ्गः ५ ॥ १५९९ ॥ निर्विकृतिकाधिकारशेषमाह—

पंचेव य खीराइं चत्तारि दहीणि सप्पि नवणीता ।
चत्तारि य तिल्लाइं दो वियडे फाणिए दुन्नि ॥ १६०० ॥

पञ्च क्षीराण्यजोष्ट्रीगोमहिष्येडिकानाम्, तथा चत्वारि दधीनि उष्ट्रीणां दध्नोऽभावात्, तथा चत्वारि सर्पींषि घृतानि, चत्वारि नवनीतानि । चत्वारि तैलानि तिलातसीलट्टासर्षपाणां विकृतयः, शेषाण्यविकृतयः लेवाडाणि तु स्युः । विकटे मद्ये द्वे काष्ठजं पिष्टजं च । फाणितौ गुडौ द्वौ द्रवगुडः पिण्डगुडश्च ॥ १६०० ॥

महुपुग्गलाइं तिन्नि चलचलओगाहिमं तु जं पक्कं ।
एएसिं संसट्ठं वुच्छामि अहाणुपुव्वीए ॥ १६०१ ॥

मधूनि त्रीणि कौन्तिकं भ्रामरं माक्षिकं च । त्रीणि पुद्गलानि मांसानि जलचराणां स्थलगानां खगानां च । यच्चलचलेति-शब्देन पक्कं सफेनं अवगाहेन स्नेहनोलेन निर्वृत्तं अवगाहिमं, दशमा विकृतिः । तत्राद्यद्वितीयतृतीयवारावगाहिमं विकृतिः । शेषाणि अ जोगवाहीणं कप्पन्ति । जइ नजइ यथा एगेण चेव पूयएण तवगो भरिओ बीयं चेव कप्पइ निव्विगइय-पच्चक्खाणइत्तगस्स लेवाडं तु होइ । एतेनेति स्पष्टं ज्ञायते पूपकाद्यप्यवगाहिमविकृतिरेव । एतेषां विकृतिभेदानां संसृष्टं गृहस्थसंसृष्टाकारं आनुपूर्व्या वक्ष्यामि ॥ १६०१ ॥

खीरदही वियडाणं चत्तारि उ अंगुलाइं संसट्ठं ।
फाणियतिल्लघयाणं अंगुलमेगं तु संसट्ठं ॥ १६०२ ॥

क्षीरेण मिश्रितः कूरो लभ्यते तत्र तस्य कुण्डकस्य ओदनाच्चत्वार्यङ्गुलानि दुग्धं स्यात्तदा निर्विकृतिकस्य कल्पते, पञ्चममारब्धं तदा विकृतिः। एवं दधिविकटयोरपि। फाणिततैलघृतानां मिश्रिते यद्यङ्गुलमुपरि ततः कल्पते परतो न॥१६०२॥

मधुपुग्गलरसयाणं अद्धंगुलयं तु होइ संसट्ठं ।
गुलपुग्गलनवणीए अद्दामलयं तु संसट्ठं ॥ १६०३ ॥

मधुनः पुद्गलरसकल्पश्लथमांसस्यार्द्धाङ्गुलेन संसृष्टं स्यात् । पिण्डगुडस्य पुद्गलस्य नवनीतस्य चार्द्रामलकमात्रं संसृष्टं । आर्द्रामलकशब्देन निम्बमुकुरः, यदि बहून्येतन्मानानि तदा कल्पते एकमपि वृद्धं न कल्पते ॥ १६०३॥ पारिष्ठापनिकाकारे कीदृशस्य पारिष्ठापनिकं देयं ? गुरुराह–

आयंबिलमणायंबिल चउथा बालवुड्ढसहुअसहू ।
अणहिंडियहिंडियए पाहुणयनिमंतणावलिया ॥ १६०४ ॥

पारिष्ठापनिकयोग्याः साधवो द्विधा आचामाम्लवन्तोऽनाचामाम्लवन्तश्च । अनाचामाम्लवन्त एकाशनाद्यष्टमतपो यावत् ।

दशमादितपसां पारिष्ठापनिकं न कल्पते तेषामुष्णपेयाद्यर्हत्वात् सूर्यधिष्ठानाच्च । केऽप्याचार्या अष्टमादितपो विकृष्टं केऽपि दशमादि विकृष्टं वदन्ति । तत्र ये अष्टमं वि(अवि)कृष्टमाहुः तेषामष्टमं यावत् पारिष्ठापनिकं कल्प्यं । तत्राचामाम्लकचतुर्थभक्तयोर्मध्ये चतुर्थकृते देयं, सोऽपि द्विधा बालो वृद्धश्च बालाय देयं, सोऽपि द्विधा सहोऽसहश्च असहाय देयं तत्रापि हिण्डिताय देयं न त्वहिण्डिताय । तत्रापि प्राघुर्णकाय देयं मुख्यतो न तु वास्तव्याय । एवं चतुर्थभक्तो बालोऽसहो हिण्डितः प्राघुर्णकः पारिष्ठापनिकं भोज्यते १ । तदभावे बालोऽसहो हिण्डितो वास्तव्यः २ । तदभावे बालोऽसहोऽहिण्डकः प्राघुर्णकः ३ । तदभावे बालोऽसहोऽहिण्डको वास्तव्यः ४ । एवमेतेन करणोपायेन चतुर्भिः पदैः षोडशभङ्गाः स्युः । स्थापना—

| | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| [illegible] | ऽ | — | ऽ | — | ऽ | — | ऽ | — | ऽ | — | ऽ | — | ऽ | — | ऽ | — |
| [illegible] | ऽ | ऽ | — | — | ऽ | ऽ | — | — | ऽ | ऽ | — | — | ऽ | ऽ | — | — |
| [illegible] | ऽ | ऽ | ऽ | ऽ | — | — | — | — | ऽ | ऽ | ऽ | ऽ | — | — | — | — |
| [illegible] | ऽ | ऽ | ऽ | ऽ | ऽ | ऽ | ऽ | ऽ | — | — | — | — | — | — | — | — |

एवं क्रियमाणे यावदन्त्यभङ्गे देयं । ततोऽपि वहौ परिष्ठाप्ये सर्वेभ्यो देयं । यथाचाम्लिकचातुर्थिकयोर्मध्ये चातुर्थिकाय देयमुक्तं तथाचाम्लिकषष्ठतपसोरपि १६ भङ्गाः । ततोऽष्टमक ( तथाचाम्लिकाष्टमतपसोरपि ) १६ भङ्गाः । आचाम्लनिर्विकृत्योरपि १६, तत्रा(चाचा)म्लाते देयं, तथाचाम्लकस्थानयोर्भङ्गाः १६ आचाम्लवते देयं । आचामाम्लैकाशनयोः १६ आचाम्लवते देयं । एवं आचाम्लेन चतुर्थषष्ठाष्टमनिर्विकृत्येकस्थानैकाशनसत्कैः षोडशभिर्भङ्गैः सर्वे षण्णवति भङ्गाः । चतुर्थषष्ठतपसोः षोडश षष्ठतपसे देयं, चतुर्थाष्टमभक्तयोः १६ अष्टमतपसो देयं । एकस्थाननिर्विकृत्योः १६ एकस्थाना(निका)य देयं । एकस्थान(काशन) निर्विकृत्योः १६ एकस्थानाय ( एकाशनिकाय ) देयम् ॥ १६०४ ॥ परिष्ठापना कथं स्यात्तत्र विधिमाह—

विहिगहियं विहिभुत्तं तह गुरूहिं जं भवे अणुन्नायं ।
ताहे वंदणपुव्वं भुंजइ से संदिसावेउं ॥ १६०५ ॥

विधिनाऽलुब्धेन निर्दोषं गृहीतं ततो विधिना वृद्धानां प्रदर्श्यानुज्ञाप्य क्षुल्लादिनिमन्त्रणया कटप्रतरच्छेदसिंहखादनादिना ओघनिर्युक्त्युक्तेन मण्डल्यां भुक्तम् । ईदृशं उद्धरितं अधिकं जातं गुर्वनुज्ञातं पारिष्ठाप्यं ज्ञात्वा यदा गुरुर्वक्ति आर्येदं पारिष्ठापनिकमिच्छाकारेण भुङ्क्ष्व, तदा तस्य वन्दनं दत्त्वा संदिश्य भोक्तुं कल्प्यम् ॥ १६०५ ॥

चउरो य हुंति भंगा पढमे भंगंमि होइ आवलिया ।
इत्तो अ तइयभंगो आवलिया होइ नायव्वा ॥ १६०६ ॥

चत्वारो भङ्गाः स्युः । विधिगृहीतं विधिभुक्तं १ विधिगृ० अविधिभुक्तं २ अविधिगृ० विधिभुक्तं ३ अविधिगृ० अविधिभुक्तं ४ । प्रथमे भङ्गे पूर्वोक्तावलिकानां भोक्तुं कल्प्यं । द्वितीये परिष्ठाप्यते । अविधिभुक्तं नाम काकशृगालादिरीत्या भुक्तं, तत्र यद्वर्धते तदुज्झ्यते । दाने छर्द्यादिदोषः । ईदृग् यो दत्ते यश्च भुङ्क्ते द्वयोरपि विवेकः क्रियतेऽपुनःकारेण वोपस्थितयोः पञ्चकल्याणं दीयते । तृतीयभङ्गेऽविधिगृ० स्वभोजनार्थं स्निग्धादिबहुलाभं लात्वा विधिना भुक्तं रात्निकेन सह मण्डल्यां, तदुद्धरितं आवलिकानां कल्प्यं । अविधिगृहीतं अविधिभुक्तं अकल्प्यम् । तथा यद्वाऽसंस्तरणेऽशुद्धं गृहीतं ततो मण्डल्यां वृद्धादेशाद्विधिना भुक्तं । तत्रावलिकया न कल्पते ॥ १६०६ ॥ व्याख्यातं आद्यगाथोक्तं प्रत्याख्यानद्वारं । प्रत्याख्यातारमाह—

पच्चक्खाएण कया पच्चक्खाविंतए वि सूआए(उ) ।
उभयमवि जाणगेअर चउभंगे गोणिदिट्ठंतो ॥ १६०७ ॥ उभयमवि जाणगेअर चउभंगे गोणिदिट्ठंतो ॥ १६०७ ॥

उभयमवि जाणगेअर चउभंगे गोणिदिट्ठंतो ॥ १६०७ ॥ न हि प्रत्याख्यानं प्रत्याख्याता गुरुस्तेन द्वारगाथोक्तेन प्रत्याख्या(ख्यापयि)तर्यपि शिष्ये सूचा कृता ज्ञेया तौ च वाच्यौ । न हि प्रत्याख्यानं प्रायो गुरुशिष्यौ विना स्यात् । उभयोरप्यत्र ज्ञातरि अज्ञातरि च चतुर्भङ्गः तत्र चतुर्भङ्गे गोदृष्टान्तः ॥१६०७॥ भावार्थं स्वयमाह—

मूलगुणउत्तरगुणे सव्वे देसे य तह य सुद्धीए । पच्चक्खाणविहिन्नू पच्चक्खाया गुरू होइ ॥१६०८॥

मूलगुणेषूत्तरगुणेषु च सर्वतो देशतश्च तथा च शुद्धौ षड्विधायां श्रद्धानादिरूपायां प्रत्याख्यानविधिज्ञः प्रत्याख्याता गुरुः स्यात् ॥ १६०८ ॥

किइकम्माइविहिन्नू उवओगपरो अ असढभावो अ ।
संविग्गथिरपइन्नो पच्चक्खाविंतओ भणिओ ॥ १६०९ ॥

कृतिकर्मादिविधिज्ञो वन्दनादिविधिज्ञः प्रत्याख्यानाकारप्रकारज्ञः उपयोगपरः संविग्नो मोक्षार्थी स्थिरप्रतिज्ञः प्रत्याख्यापयिता शिष्यो भणितो जिनाद्यैः ॥ १६०९ ॥

इत्थं पुण चउभंगो जाणगइयरंमि गोणिनाएणं ।
सुद्धासुद्धा पढमंतिमा उ सेसेसु अ विभासा ॥ १६१० ॥

अत्र प्रत्याख्यातृप्रत्याख्यापयितृभ्यां चतुर्भङ्गी । जानतीतरस्मिंश्च गोदृष्टान्तेन । प्रत्याख्याता गुरुः प्रत्याख्यापयिता शिष्यः । शुद्धाशुद्धौ प्रथमान्त्यौ शेषयोर्भङ्गयोर्विभाषा विभागः कार्यः । यथा नमस्कारपौरुष्यादिकं विधिं जानन् जानतः प्रत्याख्यानं कारयति आद्यो भङ्गः शुद्धः, अजानन्नजानतः कारयति तुर्यो भङ्गोऽशुद्धः । अत्र ज्ञातेन दृष्टान्तेन गावो ज्ञेयाः । यदि गवां प्रमाणं स्वामी वेत्ति गोपोऽपि वेत्ति तदा स्वामी सुखं वृत्तिं दत्ते गोपालश्च लाति । एवं शुद्धाशुद्धौ प्रथमान्त्यभङ्गौ स्याताम् । शेषयोर्भङ्गयोर्विभाषा । स्थापना यथा गुरोर्जानतः शिष्यस्याजानतो द्वितीयभङ्गः । इह तत्कालं शिष्यं संक्षेपतः प्रबोध्य प्रत्याख्यानविधिं ज्ञापयित्वा गुरोः प्रत्याख्यानं ददतोऽयमपि शुद्धः, अन्यथा त्वशुद्धः । गुरोरजानतः प्रत्याख्याने तृतीयः । यथा सामान्यमाध्वादिपार्श्वे प्रत्याख्यानाकारादिज्ञः श्राद्धः प्रत्याख्याति, अयं कारणे शुद्धः, अकारणेऽशुद्धः । यथा प्रभुर्गवां प्रमाणवेत्ता व्यग्रः सन् सन्दिशत्यज्ञस्यान्यस्य ततः स सन्दिष्टोऽज्ञस्य गोपालस्य तदुक्तमात्रेण वृत्तिं दत्ते, असन्दिष्टो न दत्ते । एवमज्ञो गुरुसन्दिष्टः प्रत्याख्यापयिता शुद्ध एव । एवं प्रभुसन्दिष्टादिषु विभाषा ॥ १६१० ॥

उक्तं प्रत्याख्याताद्वारम्, प्रत्याख्यातव्यमुक्तमप्यध्ययने द्वाराशून्यार्थमाह—

दव्वे भावे य दुहा पच्चक्खाइव्वयं हवइ दुविहं ।
दव्वंमि अ असणाई अन्नाणाई य भावंमि ॥ १६११ ॥

द्रव्ये भावे प्रत्याख्यातव्यं स्यादिति द्विविधं ज्ञेयं । द्रव्ये प्रत्याख्यातव्यमशनादि । अज्ञानादि तु भावे द्वा० ३ । अथ

प्रत्याख्यातृप्रत्याख्यापयित्रोः चतुर्भङ्गी ।

पर्षद्द्वारं, पर्षदिति प्रत्याख्यानार्हमनुष्यश्रेणिः सा द्विधा उपस्थिताऽनुपस्थिता च। उपस्थिता श्रोतुं आगता, अनुपस्थिता श्रोतुमनागता। उपस्थितापि द्विधा सम्यगुपस्थिता च मिथ्योपस्थिता च। मिथ्योपस्थिता कपटागता गोविन्दाचार्यवत्। सम्यगुपस्थिता द्विधा भाविताऽभाविता च। भाविता द्विधा विनीताऽविनीता च। विनीता द्विधा व्याक्षिप्ताऽव्याक्षिप्ता च। व्याक्षिप्ता या सीवनादिकर्मपरा, अव्याक्षिप्ता द्विधा उपयुक्ता अनुपयुक्ता च। तत्रोपस्थित १ सम्यगुपस्थित २ भावित ३ विनीत ४ अव्याक्षिप्तो ५ पयुक्तायाः ६ पर्षदः प्रत्याख्यानं वाच्यं, उपलक्षणादन्यदावश्यकादि सर्वं श्रुतं च वाच्यं। एतद्विपरीतायाः अनुपस्थितादिविशेषणाया न देयं। एवं षट्पदैः अन्त्यपदादिपरावर्त्तेन प्राक्तनषोडशभङ्गवत् अत्र चतुःषष्टिभङ्गा ज्ञेयाः, पश्चानुपूर्व्या द्विगुणगुरुलघुकरणे यदा सर्वलघुः समेतः तावता भङ्गकाः पूर्णाः स्युः। अत्राद्यो भङ्गः शुद्धः शेषा न ॥१६११॥ तत आह–

सोउं उवट्ठियाए विणीयवक्खित्ततदुवउत्ताए।

एवंविहपरिसाए पच्चक्खाणं कहेयव्वं ॥ १६१२ ॥- ( द्वारम् )

श्रोतुं सम्यगुपस्थितायाः विनीतायाः अव्याक्षिप्तायास्तदुपयुक्तायाः पर्षदः 'एवंविधे'त्यादि द्वा० ४। अथ कथनविधिः– पूर्वं मूलगुणाः साधुधर्म्मः स उच्यते तदशक्तस्य श्राद्धधर्म्मः। उत्तरगुणेषु पूर्वं षण्मासतप उच्यते ततो यावद्येन शक्त्या कर्तुं शक्यते तद्देयं ॥ १६१२ ॥ अथनाऽयं कथनविधिः—

आणागिज्झो अत्थो आणाए चेव सो कहेयव्वो।

दिट्ठंति उ दिट्ठंता कहणाविहि विराहणा इअरा ॥ १६१३ ॥ ( द्वारम् )

आज्ञा आगमस्तद्ग्राह्यस्तद्विनिश्चेयोऽर्थो विचारोऽनागतातिक्रान्तप्रत्याख्यानादिः सौधर्म्मादिर्वा आगमेनैवासौ कथयितव्यः न दृष्टान्तेन । रत्नज्ञपित्रा समग्रज्ञापितमूल्यः पुत्रो रत्नानि विक्रीणन् परोक्तमल्पमूल्यं न श्रद्धत्ते ततो मृषा न वदेर्दिति । तथा दार्ष्टान्तिको दृष्टान्तवाच्योऽर्थो वह्न्यादिदृष्टान्तात् दृष्टान्तदर्शनात् कथनीयः, यथा आत्मा नित्यानित्यो वस्तुत्वाद् घटवत् इत्यादिदृष्टान्तात् दृष्टान्तेन वाच्यं । यद्वा यथामुकमेवं भवता ज्ञातं तथेदमपि प्रत्येतव्यमिति कथनेऽयं विधिः, अन्यथा विपर्ययोक्तौ कथनविधेर्विराधना स्यात् द्वा० ५ ॥ १६१३ ॥ अथ फलं—

पच्चक्खाणस्स फलं इहपरलोए अ होइ दुविहं तु । इहलोइ धम्मिलाई दामन्नगमाई परलोए ॥१६१४॥

इहलोके फलं स्यात् परलोके चेति द्विविधं । इहलोके दृष्टान्तो धम्मिलादिः । यथा धम्मिल्लेनाचामाम्लानि कृत्वा फलं प्राप्तं । अत्र धम्मिल्लहिण्डी वीक्ष्या, आदिशब्दात् कफविप्रुणमलामर्शादयो लब्धयः स्युः । परलोकफले दृष्टान्तो दामन्नकः । यथा राजपुरे एकः कुलपुत्रको जिनदासमित्रसंगात् साधुपार्श्वे गतो मत्स्यमांसनियमं ललौ । दुर्भिक्षे मत्स्याहारे लोके श्यालकैः बलाद् ह्रदं नीतः । तत्र तेन जालं क्षिप्तं मत्स्यान् दृष्ट्वाऽमुञ्चत् । एवं दिनत्रयं बलात्कृतं । एकदा मत्स्यपक्ष्म त्रुटितं ततो निवृत्तोऽनशनाद्राजगृहे श्रेष्ठिसुतो दामन्नकनामाऽभूत् । अष्टवर्षस्य मार्या कुलं मृतं । तत्रैव सागरपोतस्य गृहे तस्थौ । तत्र साधू भिक्षाया ( भिक्षार्थ-माया)तौ । साधूक्तिरेष गृहस्वामीति । गृहेशेन श्रुत्वाऽन्त्यजानामर्पितः, तैरङ्गुलिच्छेदान्निर्विषयीकृतः । नश्यन् श्रेष्ठिगोकुल-

पतिनाऽनाथत्वात् स्थापितः पुत्रस्थाने, यौवने सागरपोतस्तत्रैतस्तं दृष्ट्वोपलक्ष्य लेखं दत्त्वा मारणाय राजगृहे पुत्राय प्रैषि चैत्ये सुप्तः क्रमात् विषापरिणयनं । पुनः श्रेष्ठिना मातृदेवीपूजायै स प्रैषि यावत्स श्रेष्ठी जातः । यावत् 'अणुपुंखमावहं(यं)ता वि अणत्था तस्स बहुगुणा हुन्ति । सुहदुक्खकच्छपुड(ड)ओ, सुखदुःखयोः करणविपत्रे कच्छापुटः कक्षापुटो यस्य स सुखदुःखकक्षापुटः, जस्स कयंतो वहइ पक्खं' । १ । इति गाथा, ततस्तिस्रो लक्षाः ददौ । राज्ञा पृष्टे सम्बन्धं श्रुत्वा प्रमादः कृतः, ततो बोधिलाभो धर्म्माद्देवलोकः आदिशब्दात्सुकुलप्राप्तिमुक्ती ॥ १६१४ ॥

**पच्चक्खाणमिणं सेविऊण भावेण जिणवरुद्दिट्ठं । पत्ता अणंतजीवा सासयसुक्खं लहुं मुक्खं ॥१६१५॥**

इदं प्रत्याख्यानं जिनवरोपदिष्टं, सेवित्वाऽनन्तजीवा लघु शीघ्रं मोक्षं प्राप्ताः । प्रत्याख्यानफलं 'पच्चक्खाणंमि कए' इत्यादौ शास्त्रद्वारेण (णोक्तं, इह तु) लोकनीत्या उक्तं ॥ १६१५ ॥ उक्तोऽनुगमो व्याख्यारूपः, अथ नयाः—

**नायंमि गिण्हियव्वे अगिण्हियव्वंमि चेव अत्थंमि । जइयव्वमेव इइ जो उवएसो सो नओ नाम ॥१६१६॥**

गृहीतव्येऽगृहीतव्ये चार्थे ज्ञाते एव सति यतितव्यं, ततो ज्ञानमेव प्रमाणं न क्रिया ज्ञानं विना साध्यसिद्ध्यभावात् इति ज्ञाननयः । अथ क्रियानयः, गृहीतव्येऽगृहीतव्ये चार्थे ज्ञाते यतितव्यमेव ततः क्रियैव प्रमाणं न ज्ञानं यत्नं विना साध्यसिद्ध्यभावात् इति द्वयोर्ज्ञानक्रियानययोर्य उपदेशः, स नयो नाम कथ्यते ॥ १६१६ ॥ अथ प्रमाणमाह—

**सव्वेसिं पि नयाणं बहुविहवत्तव्वयं निसामित्ता । तं सव्वनयविसुद्धं जं चरणगुणट्ठिओ साहू ॥१६१७॥**

॥ इति पच्चक्खाणनिज्जुत्ती समत्ता । श्रीभद्रबाहुस्वामिविरचिता श्रीमदावश्यकनिर्युक्तिः समाप्ता ॥

सर्वेषामपि नयानां नैगमसंग्रहादीनां ज्ञान( ज्ञानक्रिया )द्वयसंगृहीतानां बहुविधां वक्तव्यतां निशम्य तत्सर्वनयविशुद्धं सर्वनयसंमतं ज्ञेयं यत्साधुश्चरणगुणव्यवस्थितश्चारित्रक्रियाज्ञानस्थितः स्यात्। यतः पूर्वं ज्ञाते गृहीतव्येऽगृहीतव्ये चार्थे यतितव्यमेव पश्चात्क्रियायत्नः कार्य एव ततश्चारित्रं, यतः सर्वनया भावनिक्षेपमिच्छन्ति। भावश्च रत्नत्रयाराधनपरः साधुः। इति प्रत्याख्याननिर्युक्तिः समाप्ता।

ते श्रीअञ्चलगच्छमण्डनमणिश्रीमन्महेन्द्रप्रभ—श्रीसूरीश्वरपट्टपङ्कजसमुल्लासोल्लसद्भानवः।
तर्कव्याकरणादिशास्त्रघटनाब्रह्मायमाणाश्चिरं, श्रीपूज्यप्रभुमेरुतुङ्गगुरवो जीयासुरानन्ददाः ॥ १ ॥

तच्छिष्य एष खलु सूरिरचीकरत् श्री—माणिक्यशेखर इति प्रथिताभिधानः।
चञ्चद्विचारचयचेतनचारुमेनां सद्दीपिकां सुविहितव्रतिनां हिताय ॥ २ ॥

एषा श्रीआवश्यकनिर्युक्तेर्दीपिका चिरं जयतात्। मुनिनिचयवाच्यमाना तमोहरा दीपिका पिण्डनिर्युक्तेरोघनिर्युक्तिदीपिकादशवैकालिकस्याप्युत्तराध्ययनदीपिके ॥ ३ ॥

आचारदीपिकानावतत्त्वविचारणं तथास्य। एककर्तृतया ग्रन्था अमी अस्याः सहोदराः ॥ ४ ॥

इति श्रीविधिपक्षमुख्याभिधानश्रीमदञ्चलगच्छाधिराजसुगुरुसुविहितचक्रवर्त्तिश्रीमन्मेरुतुङ्गसूरीन्द्रक्रमकमलमरालशिष्यश्रीमाणिक्यशेखरसूरिविरचिता श्रीआवश्यकनिर्युक्तिदीपिका समाप्ता।

